॥ श्रीमते रामानुजाय नमः ॥

# भूमिका ।

## इदमिह सर्वे विपश्चितो विदाङ्कुर्वन्तु–

श्रीमत्परमहंस परिव्राजकाचार्य जगद्गुरु श्रीरामानुज भगवत्पादीय सनातन परमवैदिक सत्सम्प्रदायाचार्याः श्रीमद्वेदमार्ग प्रतिष्ठापनाचार्योभयवेदान्तप्रवर्त्तकाचार्याः श्रीकाञ्चीप्रतिवादिभयङ्करसिंहासनाधीश्वराः श्रीमदनन्ताचार्यस्वामिनः सनातनपरमवैदिकसद्धर्मसत्सम्प्रदायप्रचारकामनया सर्वत्र भारते पर्यटन्तो मार्गक्रमेण वाराणसीमप्यतीताषाढमासे समागता वार्षिकम्मासद्वयं तत्रात्यवाहयन् । धार्मिकाणि कानिचिद्व्याख्यानानि प्रावर्तयन्, काशीवासिनः पण्डितांश्च सममानयन् । अथ तेष्वाचार्येषु १३–९–१६ दिने काशीतः प्रस्थानार्थं कृतप्रबन्धेषु सत्सु रुद्रभट्टनामा कोऽपि किमपि विज्ञापनपत्रं तस्मिन् दिने सायं प्राकाशयत्, यस्मिन्नेव दिने रात्रौ निश्चितमभूत्प्रस्थानम् । तत्र च तेन विशिष्टाद्वैत सिद्धान्तो ऽवैदिक इति, तस्य सिद्धान्तस्यावैदिकत्वमात्मना साध्येतेति, विद्वत्परिषदि चिकीर्षितायां सभायां तत्सिद्धान्तपक्षपातिभिरात्मना सह शास्त्रार्थविचारः क्रियतामितिच प्रकाशितमभूत् । इदं च सम्प्रदायनिन्दागर्भितं प्रकाशनपत्रं दृष्ट्वा स्वामिनो निश्चितमपि प्रस्थानं न्यरुन्धन् । परदिने च विद्वत्परिषदि रुद्रभट्टेन कृतायां

सभायां तत्पक्षपातिजनप्रचुरायां स्वयं गमनमनुचितम्मन्यमाना-स्सभावृत्तान्तावगमाय स्वीयान् पुरुषान् प्रेषयन् । रुद्रभट्टस्तु स्वप्रतिज्ञानुसारेण विशिष्टाद्वैतसिद्धान्तावैदिकत्वसाधनेप्रवर्तमानः कांश्चि त्प्रश्नानवतारयत्केवलम्पूजनीयानाचार्यभाष्यकारादीनप्यधिक्षिपन् । तत्रोपस्थितेषु देशिकवरदाचार्येण तेषां प्रश्नानामुत्तरेषु क्रमेण दीय मानेष्वपूर्ण एव कार्ये सभापतिपदमलङ्कृतवता महाशयेन सभा व्यसर्ज्यत । एतादृशीमव्यवस्थामाकर्ण्य स्वामिभिस्तत्परदिने कोऽपि सभायां न प्रेषितः । रुद्रभट्टस्तत्पक्षपातिनश्च सम्मिलिता विशिष्टाद्वैतसम्प्रदायावलम्बिनः कस्यापि पुरुषस्यानागमनमाकलयन्तो विजयोद्घोषस्यानुकूलां स्थितिं मन्यमानास्स्वपक्षविजयमुद्घोषयन् । ततः श्रीमदाचार्याणामाज्ञया किमपि प्रकटनपत्रं प्रकाशितं कार्यकर्त्रा । तत्र च सभावृत्तान्तोल्लेखपूर्वकं, स रुद्रभट्टशर्मा शास्त्रार्थविचारार्थं श्रीमदाचार्याणां सन्निधिं प्रत्यागच्छत्वित्युल्लिखितमभूत । चत्वारश्च दिवसाश्शास्त्रार्थविचारस्य समयतया पर्यकल्प्यन्त । सतु रुद्रभट्टस्स्वयं शास्त्रार्थविचारार्थमनागच्छन्नेव, यत्र कुत्रापि सर्वजनसाधारणे स्थाने सभा प्रवर्तयितव्येति मध्यस्थश्च कोपि विद्वान् परिकल्पनीय इति श्रीकाशीराजस्सभापतिः कल्पनीय इति सभायास्सर्वोऽपि प्रबन्ध आचार्यैरेव विधेय इति, तथा परिकल्पितायां सभायामागमिष्यामीति च किमपि विज्ञापनपत्रं प्रकाश्य तूष्णीम्भावमवालम्बत । अत्रान्तरे काशीवासिषु पण्डितेषु प्रधानतया गण्यमानस्य श्रीसुब्रह्मण्यशास्त्रिणः पुत्रेण विश्वेश्वरशास्त्रिणा

किमपि विज्ञापनपत्रं प्राकाश्यत । तत्र च तेन श्रीरामानुजीयश्रीभाष्ये शतं विरोधान् प्रदर्शयामीति प्रतिज्ञापूर्वकं चत्वारो विरोधाभासास्समुल्लिखिता अभूवन् । तान् विरोधाभासान् परिहरता मया विरोधपरिहारनामकः कोपि निबन्धः प्रकाशितोऽभूत्, विश्वेश्वर शास्त्री तु स्वयं तस्य खण्डनमकुर्वन्मौनमवालम्बत । तत्प्रेरितो वा स्वयमेव वा स एव रुद्रभट्टो विरोधपरिहारखण्डनं नाम कमपि प्रबन्धं प्राकाशयत्, तत्र च "स्वगृहीतशशस्य त्रयः पादाः" इति न्यायमवलम्बमानेनेव यद्वा तद्वा लिखता विश्वेश्वरशास्त्रिणः पक्षं साधयितुमस्मदुक्तं खण्डयितुं च बहु प्रयतितमनेन । तमिमं प्रबन्धमत्र परीक्षिष्यामहे वयम् ।

"**सारासारविवेकज्ञा गरीयांसो विमत्सराः ।**
**प्रमाणतन्त्रास्सन्तीति कृतो वेदार्थसंग्रहः ॥**"

इति भगवत्पादीयां सूक्तिं प्रमाणयन्तो वयमत्र कर्मणि प्रवृत्ता इति नास्ति पुरोभागिनां निन्दया कापि हानिरस्माकम् । गुणदोषविवेचकास्सन्तो न स्वकीयात्स्वभावात्प्रच्युता भविष्यन्तीति त्वस्मदीयः प्रत्ययः । इति ।

श्रीकाञ्ची श्रीप्रतिवादिभयङ्कराचार्यसंस्थानम् । काशी । ७–११–१६ } **देशिक वरदाचार्यः**
आस्थानपण्डितः ।

श्रीमते रामानुजाय नमः ।



# दुर्वाद-विधूननम् ।

ते दक्षिणामूर्तिमुखास्स्फुरन्ति
यच्छक्तिलेशाद्व्यपदेश्यवाचः ।
देवस्समे वाजिमुखः प्रसन्नो
जिह्वाग्रसिंहासनमभ्युपैतु ॥

रामानुजो मुनिर्जीयाद्यत्सूक्त्यम्बुविशोधितम् ।
कुदृग्दुर्वादमलिनं ब्रह्म निर्मलमुद्बभौ ॥

श्रीरामानुजभाष्ये विश्वेश्वरशास्त्रिणा विरोधा ये ।
उद्भाविता मया खलु समाहितास्ते विरोधपरिहारे ॥

श्रीरुद्रभट्टशर्मा व्यधत्त तस्यापि खण्डनं किमपि ।
दुर्वादधूननेऽस्मिन् तस्य करिष्यामि खण्डनं सम्यक् ॥

विरोध परिहारे खलु आरम्भे काशीमागतानां श्रीमतां प्रतिवादिभयङ्कराचार्याणां पैत्र्यामिदं दृष्ट्वाऽसहमानामसूयालूनां-

मतएव निन्दाक्षराणि प्रयुञ्जानानां पुरुषाणामन्यतमो विश्वेश्वर शास्त्र्यपीत्युक्तम् । तत्र खण्डनकार इत्थं प्रतिवक्ति—

"कियदिदं नाम वभवं भवद्भिर्लोकोत्तरत्वेनावगम्यमानं श्रीमतामाचार्याणाम् ? यच्चे नाम न सहेरन् ! भवदीयाचार्यापेक्षया शतगुणितवैभवातिशयशालिनां वल्लभाद्यनुयायिनां कादयां सत्त्वात्" । इति ।

अत्रेदं वक्तव्यम्, न खलु वैभवस्य लोकोत्तरत्वं तदसहिष्णुतायां प्रयोजकम्, "अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ।" इति हि सूक्तिः । स्वीयवैभवापेक्षयाऽतिशयितवैभवासहिष्णुत्वं चासूयालूनां स्वाभाविकम् । अस्मदीयाचार्यापेक्षयातिशयितवैभवाः पुरुषा लोके न सन्तीति च नास्माभिरुक्तम् । कार्यात्कारणानुमानं च सर्वत्र प्रसिद्धम् । परकीयसम्प्रदायदूषणे प्रथमप्रवृत्तिर्हि तत्कारणं किमपि सूचयेदेव । असूयैव तत्कारणं भवितुमर्हतीति चास्माभिरनुमितम् । तत्र यद्वा तद्वा वदता खण्डनकृता न किमपि समाहितम् । इति ।

यत्तु काशीस्थानां विदुषामसूयालुतां स्थापयता खण्डनकारेणोक्तम्—

"किन्तु सुरासुरवृन्दसेवितचरणारविन्दयुगलस्य भगवतो विश्वेश्वरस्य काशीमागत्यापि दर्शनमकृत्वा स्वगोष्ठ्यां तदनादरद्योतकानि वचनानि प्रयुञ्जानान्, भस्मरुद्राक्षधारिणस्तद्भक्तांश्चोपहसतो भवदाचार्यानाकर्ण्य केवलमनुकम्पापरायणाः खेदं प्रकाशयन्तो बोधयन्ति । यत् भवत्सिद्धान्तानुसारेण

शिवस्य श्रुतिस्मृतिपुराणजेगीयमानमहिमातिशयस्य भवदीयाचार्यापेक्षयोत्तमत्वं विद्यत इत्यत्र नास्ति सन्देहलेशोपि । अद्य यावद् वाराणसीं समागता विभिन्नमतानुयायिनोप्याचार्या विश्वेश्वरदर्शनं विधायैव निवासं प्रति प्रस्थिताः । आचार्यपदवीमारुरुक्षवः श्रीमदनन्ताचार्यस्वामिनःपूर्वाचार्यसरणिमतिक्रामन्तो विपश्चितां सहृदयानां चेतस्तु विस्मयमादधतीति महान् खेद इति."—इति ।

अत्र वदामः । अस्तु सुरासुरवृन्दसेविनो विश्वेश्वरः, अस्तु चेदानीं तस्यवेयं काशीनगरी, तथापि नास्ति कोपि तादृशो नियमः काशीमागतैस्सर्वैरपि विश्वेश्वरस्य दर्शनं कर्तव्यमिति । यः खलु पुरुषो यां देवतामनन्यभावेनोपास्ते, सचेदनन्यताभङ्गभिया देवतान्तरोपासनां न कुर्यात्तत्र तस्य कोवा दोषो वक्तुं शक्यः । ".अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।" इति "मामेकं शरणं व्रज" इति, "मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।" इत्यादिषु भगवदनन्योपासकत्वं हि स्पष्टमभिधीयते । "कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः" इति कामिनामेवान्यदेवतायजनं प्रतिपाद्यते । ततश्च निष्कामानां परमैकान्तिनामनन्यवैष्णवानां स्वोपास्यदेवतातिरेकेणान्यदेवतायजनमनावश्यकमनुचितं च भवति ।

स्पष्टमेव च परमैकान्तिधर्मप्रतिपादकेषु शास्त्रेषु देवतान्तरदर्शनादिकं तेषामधिकारिणां निषिध्यते । अधिकारभेदेन सर्वाणि कर्माणि व्यवस्थितानि । इत्यश्च परमैकान्तिना केनचित्स्वोपास्य-

देवताभिन्नदेवतापूजनादिकं चेन्न क्रियेत, न तेन स दोषभाग्भवति। परमैकान्तिभिरपि स्वाराध्यदेवताराधनाङ्गतया प्राप्तं देवतान्तरार्चनादिकं न परित्यज्यते। शास्त्रीयेषु कर्मस्ववर्जनीयतया प्राप्तं देवतान्तरोद्देश्यकं होमादिकमपि तैः क्रियत एव। परन्तु तत्र सर्वत्र तत्तदन्तर्यामी परमात्मैव तेषां समाराध्यो भवति। स्वतन्त्रतया तत्तद्देवतान्तराराधनादिकं तु निषिद्धं तैर्न क्रियते। नखलु शिवनिर्माल्याभोजनमात्रेण कश्चिच्छिवद्वेषी कथ्यते। तत्र चेच्छास्त्रप्रामाण्याद्व्यवस्था, अत्रापि तथैव कुतो न भवति। शिवदर्शनाकरणमात्रेण शिवद्वेषस्तु नानुमातुं शक्यते, उदासीनकोटौ तादृशाधिकारिणां निवेशनात्।

अस्मदाचार्या भस्मरुद्राक्षधारिपुरुषानुपहसन्तीति तु प्रत्यक्षविरुद्धम्। तस्मिन् खलु दिने पण्डितसभायां काशीवासिनो भस्मरुद्राक्षधारिणः पण्डिता एव समाहूय सम्मानितास्तैरिति सर्वे काशीवासिनो जानन्ति। अस्मत्सम्प्रदायावलम्बिषु वैरागिनामकेषु बहवो भस्मधारिणो भवन्ति। प्रतिदिनं च बहवो भस्मरुद्राक्षधारिणः पुरुषाः श्रीमदाचार्याणां सन्निधिमुपायान्ति।

काशीवासिनः पण्डिता अनुकम्पापरायणाः खेदं प्रकाशयन्तो बोधयन्तीति तूपहास्यम्, अनुकम्पायाः खलु कारणं न किमपि पश्यामः। परदुःखदुःखित्वं वा परदुःखासहिष्णुत्वं वा परदुःखनिराचिकीर्षा वा दयाशब्देनोच्यते। इयमेव चानुकम्पा। एतादृश्या अनुकम्पाया अत्र का प्रसक्तिरुपयोगो वा। कस्य दुःखेन दुःखितः कस्य

वा दु:खस्या सहिष्णवो निराचिकीर्षवो वा काशीवासिनः पण्डिताः, किमर्थं वा ते खेदं प्रकाशयन्ति ! अहो नु खलु काशीवासिनाम्पण्डितानामस्थानेऽनुकम्पा ? एतादृशा दयालवः काशीवासिनः पण्डिताः पङ्ग्वन्धबधिरादिषु दयनीयेषु कियतीं दयां प्रतिदिनं प्रकाशयन्तीति पाठका एव परीक्षन्ताम् ।

अस्मदाचार्यापेक्षया शिवस्य केनचिदाकारेणोत्तमत्वं कामं भवतु नाम, उत्तमत्वनीचत्वे सप्रतियोगिके प्रायस्सर्वत्र सम्भवतः । न खलूत्तमास्सर्वेऽपि सर्वैर्वन्दनीया इति नियमस्सम्भवति । कस्माच्चिद्ब्रह्मविदोऽपेक्षया धनेनोत्तमो वणिक्श्रित्तस्य न वन्दनीयो भवति । सर्वेश्वरेण भगवता जगत्संहारेऽधिकारिणो ज्ञानप्रदो देवदेवशिवः कामिनां पूजनीयो भवतीति सत्यं सर्वैरभ्युपगम्यते । अस्मदाचार्यास्तु परमैकान्तिनो निवृत्तिमार्गनिष्ठा निष्कामा अनन्यवैष्णवा इति तेषां विश्वेश्वरादर्शनमधिकारानुरूपमेव ।

अद्य यावत् वाराणसीं समागता विभिन्नमतानुयायिनोऽप्याचार्या विश्वेश्वरदर्शनं विधायैव निवासं प्रति प्रस्थिताः—इति स्यात्, तत्रास्मत्सम्प्रदायिन आचार्या नान्तर्भवन्तीति तु तत्त्वम् । न खलु परमैकान्तिन आचार्या अनन्ययाजिनस्स्वोपास्यदेवतातिरिक्तदेवतादर्शनमकुर्वन्निति सम्भवदुक्तिकम् ।

- एतेन—"पूर्वाचार्यसरणिमतिक्रामन्त" इत्यपि समाहितम्, न खलु सर्वेषां सर्वेऽपि पूर्वाचार्या भवन्ति । श्रीवैष्णवसम्प्रदायावलम्बिनस्तु पूर्वाचार्याः काशीमागता विश्वेश्वरदर्शनमकुर्वन्नित्यत्र नास्ति

किमपि प्रमाणम्। नचास्माकमस्मदाचार्याणां वा शिवे महाभागवते कोऽपि प्रद्वेषः। शास्त्रं तु परमैकान्तिधर्मप्रतिपादकं प्रतिषेधति। कोनोऽपराधोऽत्र।

यत्तु-"अतोऽत्रत्येषु विद्वद्वरेषु पताद्दशासूयाद्यारोपः पण्डित विश्वेश्वरशास्त्रिणि तदन्यतमस्यारोपश्च महदनौचित्यं भवतामभिव्यनक्ती"ति।

अत्र ब्रूमः—विनैव कारणं श्रीविशिष्टाद्वैतसम्प्रदायस्यावैदिकत्वं प्रतिज्ञाय, रुद्रभट्टशर्मा शास्त्रार्थविचाराय विद्वत्परिषदि चिकीर्षितायां सभायां तत्सम्प्रदायपक्षपातिन आहूतवान्, तेन कृतायां सभायां काशीवासिनस्सर्वेऽपि पण्डितास्तत्पक्षावलम्बिनस्समामिलन्। तत्पक्षमवलम्ब्य बहवोऽभाषन्त। शिवनारायणो नाम कश्चिद्विनैव कारणमपशब्दान् प्रयुञ्जान आचार्यानपमानयतिस्म। तेन कृतायां सभायां च काशीवासिनः पण्डिता बहवस्तत्पक्षावलम्बकास्समामिलन्। श्रीसुब्रह्मण्यशास्त्रिणः पुत्रो विश्वेश्वरशास्त्री श्रीरामानुजभाष्ये विरोधानसत एवोद्भावयन् प्राकाशयत। तत्परिहारे प्रकाशिते पुनस्तत्खण्डनं रुद्रभट्टनाम्ना प्रकाशितम्। सर्वमिदं काशीवासिनामसूयालुतां न व्यनक्ति चे त्किमन्यद्व्यनक्ति। अथोच्येतापि किमपि कारणं विशिष्टाद्वैतसिद्धान्तदूषणारम्भस्य, यथा खलु रुद्रभट्टेन स्वीये प्राथमिके विज्ञापनपत्रे प्रकाशितम्—"इत्थं श्रूयते रामानुजमतानुयायिनो विशिष्टाद्वैतसिद्धान्तोपदेशकाः केचनाचार्या गरीयसीं वाराणसीं प्राप्यापि निखिलश्रुतिस्मृतिपुराणैर्गीयमानमहिमातिशयस्य

भगवतो विश्वेश्वरस्य दर्शनं तन्नामग्रहणञ्च न कुर्वन्ति " इत्यादि। अयुक्तं तु तत्, रामानुजमतानुयायिभिः कैश्चिदाचार्यैश्शिवदर्शनाकरणे शैवैरामानुजसिद्धान्तस्य दूषणं कर्तव्यं कथमापद्यते। तैराचार्यैः शिवदर्शनं न कृतमित्येतावदेवात्र सत्यम्। शिवनाम श्रवणेन भस्मरुद्राक्षधारणशीलपुरुषदर्शनमात्रेण च दन्दह्यमानमानसा भवन्तीति तु मिथ्योक्तिरियम्। अयमर्थः पूर्वमेव प्रपञ्चितः। रुद्रभट्टेनापि नायमर्थः स्वानुभवावगत इत्युच्यते। अपितु श्रूयते—इति। कर्णाकर्णिकया श्रुतं यं कमप्यर्थं हेतूकृत्यानादिसिद्धश्रीविशिष्टाद्वैतसिद्धान्तस्यावैदिकत्वप्रतिपादने प्रवृत्तिर्हि न विवेकिनां कृत्यं भवति। केचिदाचार्या शिवनामश्रवणेन भस्मरुद्राक्षधारणशीलपुरुषदर्शनमात्रेण च दन्दह्यमानहृदया भवन्तीत्यनेन श्रुतोऽर्थस्सत्य इत्येव स्वीकारेपि वा श्रीविशिष्टाद्वैतसिद्धान्तदूषणप्रवृत्तौ किंकारण मुक्तं भवति। पृष्ठताडनाद्दन्तभङ्गन्यायः प्रवर्तेत। तथात्वे खलु भस्मरुद्राक्षपक्षपातिनां तद्धारणस्य शास्त्रीयत्वावश्यकत्वादिसाधनं कर्तव्यं भवति। न तु तत्प्रतिबन्दितया विशिष्टाद्वैतसिद्धान्तस्यावैदिकत्वसाधनम्। अतश्च काशीवासिनां पण्डितानां कृत्यमिदं सूचयत्येवासूयालुतामिति सिद्धं भवति।

यत्तु—" महदनौचित्यं भवतामभिव्यनक्ति " इति लेखनम्, तदविचारितरमणीयम्, अनौचित्यं खल्वस्मदीये कुत्रापि कर्मणि प्रदर्श्यमानं युक्तं भवति। त्वदीयं कर्मेदमनुचितमिति व्यवहारः प्रामाणिकः, न तु त्वमेवानुचितोऽसीत्यपि व्यवहारो भवति।

विरोधपरिहारे—शास्त्रिणस्सिद्धान्ते ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्याभूतत्वात् श्रीरामानुजभाष्ये तत्प्रदर्शिता विरोधा अपि भ्रान्तिपरिकल्पिता इति युक्तमित्युक्तं खण्डयता खण्डनकारेण यदुक्तम्—

"यथा—शास्त्रिणो मते ब्रह्मव्यतिरिक्तं सर्वं मिथ्येति रामानुजमते प्रदर्श्यमानानां विरोधानां तथाविधत्वेनैव भाव्यमित्युपपाद्य—युक्तमेवेदं सिद्धान्ताभिमानिनोऽस्येति मन्यामहे वयम्"—इत्यनेन परिहसनं। तदपि भङ्ग्यन्तरेण तदुद्भावितानां दोषाणां सत्त्वसाधकं भवतीति मन्यामहे। यतः "यथार्थं सर्वं विज्ञानमिति वेदविदां मतम्।" इत्यादि भवदाचार्योपदिष्टभाष्यकरीत्या भ्रमस्थले अधिष्ठानशुक्तिकाद्यारोप्यस्य रजतादेः पारमार्थिकसत्त्वमभ्युपगम्य भ्रान्तिविज्ञानस्य यथार्थत्वं साधयतां भवतां मते भ्रान्तिसमुद्भावितानामपि दोषाणां पारमार्थिकसत्त्वस्यावश्याभ्युपगन्तव्यत्वात्" । इति।

अत्र ब्रूमः—यथार्थं सर्वविज्ञानमिति श्रीमद्भगवद्भाष्यकाराणां सिद्धान्त इत्यत्र नास्ति सन्देहः। यथार्थख्यातिवादिनः खलु ते। भ्रमस्थलेऽपि ज्ञानस्य याथार्थ्यं सत्यमस्माभिः प्रसाध्यते। परन्तु परोक्षापरोक्षरूपविषयभेदेन भ्रमो द्विविधः। तत्रापरोक्षभ्रमस्थले पदार्थसद्भावमन्तरा सन्निकर्षासम्भवात् पदार्थसद्भावो नानाविधैः प्रकारैरुपपाद्यते। भूते भूतान्तरभ्रमस्थले त्रिवृत्करण पञ्चीकरण प्रक्रियया भूते भूतान्तरसद्भावः प्रसाध्यते। सदृशे सदृशान्तरभ्रमस्थले प्रतिनिधिन्यायेन वस्तुनि तत्सदृशवस्त्वन्तरावयवसद्भाव

उपपाद्यते । पीतशङ्ख इत्यादौ नयनवर्त्तिपित्तद्रव्यगत पीतिम्नस्सद्भाव उपपाद्यते । एवमन्यत्रापि । अपरोक्षभ्रमस्थले तु वस्तुसद्भावोऽनावश्यकः । याथार्थ्यं तु भ्रमस्थले सर्वत्र निरूप्यनिरूपकभावापन्नविषयताशालिज्ञानद्वयाङ्गीकारेण निर्वाह्यम् । इदं रजतमिति भ्रमस्थले-इदमर्थविषयकस्य ज्ञानस्य रजतविषयकस्य च ज्ञानस्य विषयतयोर्निरूप्य-निरूपकभावाङ्गीकारात्, तत्र स्वावच्छेदकावच्छिन्नाभाववन्निष्ठस्वनिरूपितविषयतानिरूपकत्व — स्वनिरूपकत्वोभयसम्बन्धावच्छिन्नविषयतात्वावच्छिन्नाभाववज्ज्ञानस्वरूपं याथार्थ्यमक्षतम् । इत्थं च विश्वेश्वरशास्त्रिणः श्रीभाष्यविरोधविषयकस्य भ्रमस्य परोक्षत्वेन तत्र वस्तुसद्भावस्य सिद्धिकथा दूरोत्सारिता । किञ्च भ्रमस्थले वस्तुसद्भावो हि त्रिवृत्करणप्रक्रियया प्रतिनिधिन्यायेन वा मुख्यतया समर्थनीयः । त्रिवृत्करणप्रक्रिया तु भूते भूतान्तरभ्रमस्थल एवोपयुज्यते । सदृशे सदृशान्तरभ्रमस्थले प्रतिनिधिन्याय उपयुज्यते । नचात्र तादृशी गतिस्सम्भवति । न च प्रकारान्तरेण वा वस्तुसद्भाव उपपादयितुंशक्यते । अतश्च धूलीपटले धूमभ्रान्त्या जायमानानुमितिस्थले ग्रहणस्मरणात्मकं ज्ञानद्वयमभ्युपगम्य देशान्तरकालान्तरदृष्टस्य वह्नेस्स्मरणेन 'अयं' 'वह्निमान्' इति ग्रहणस्मरणात्मकज्ञानद्वयीयविषयतयोर्निरूप्यनिरूपकभावाच्च याथार्थ्यं यथोपपादनीयं, तथैवात्राप्युपपादनीयमिति न विश्वेश्वरशास्त्रिणो भ्रमस्य वस्तुसत्तोपपादकत्वसम्भवः । किन्तु स्वमतभाष्ये वाऽन्यत्र वा बुद्धं विरोधमेवात्र स्मरति स इति सिद्धं भवति । किंच-भ्रमस्थलेऽस्माभिर्ज्ञानस्य याथार्थ्योप-

पादनेऽपि न हानोपादानादिव्यवहारक्षतिः । अयमर्थश्च – "बाध्य-बाधकभावस्य भूयस्त्वेनोपपद्यते । शुक्तिभूयस्त्ववैकल्य साकल्य ग्रहरूपतः" इत्यादि भाष्येणोपपादितस्तत्रैव द्रष्टव्यः । एवं च विश्वेश्वरशास्त्रिणः श्रीभाष्यविरोधविषयकज्ञानस्यास्मदीयज्ञानयाथार्थ्य-सिद्धान्तानुसारेण यथार्थत्वेऽपि बाध्यत्वस्यापरिहरणीयतया न तया भ्रान्त्या कस्याप्यर्थस्य सर्वलोकसाधारणस्य सिद्धिसम्भव इत्य वधेयम् ।

यत्तु – विरोधवरूथिन्या दुर्ग्रन्थत्वं भवन्मतेऽसामञ्जस्य-प्रदर्शनेनैव वा कारणान्तरं, किञ्चिदस्ति वेति विकल्प्य, "यद्याद्यः पक्षस्तर्हि सिद्धान्तान्तरेषु दोषोद्भावनपरत्वदीयग्रन्थस्य कुतो न दुर्ग्रन्थत्वमिति वक्तव्यम् ।" इति खण्डनकृतोक्तम् । तत्रेदम-वधीयताम् । विरोधवरूथिन्यां प्रदर्शिता विरोधाभासास्सर्वेऽपि भ्रान्तिमात्रसमुद्भाविता आपातरमणीया निरूपणे सत्यसद्रूपा भवन्ति । स्पष्टश्चायमर्थः कुदृष्टिध्वान्तमार्तण्डादिषु । तत एव चासद्विरोधनिरू-पणैदम्पर्येण प्रवृत्तस्य ग्रन्थो दुराग्रहमात्रकृतो दुर्ग्रन्थ इति ।

यदपि – विश्वेश्वरशास्त्रिणा विरोधाभासा इमे स्वबुद्धिबला-विष्कृतत्वेन स्वगोष्ठ्यां प्रकाशिता इति कथं निरधारीति खण्डन-कृतोक्तम् । तत्रोच्यते । प्रायःखलु ग्रन्थकृतोऽन्यदीयग्रन्थेभ्यो विषयानुद्धरन्तस्तद्ग्रन्थनामग्रहणपूर्वकं तथा कुर्वन्तो दृश्यन्ते । नामग्रहणं विना न्यदीयग्रन्थगतान् विषयानुद्धरन्तो निन्द्यमानाश्च दृश्यन्ते । सज्जनसमादृतोऽयं पन्थाः । ये खलु स्वयं किमपि

विषयं नवीनतया कल्पयितुमसमर्था अपि सुखेन ख्यातिसम्पादनं कर्तुकामास्तेऽन्यदीयग्रन्थगतानर्थानविकलं ताद्रूप्येण वा किञ्चिदन्यथाभावेन वा समुद्धरन्तोऽपि पाठितृहृदयेषु स्वीयत्वबुद्धिसमुत्पादनेन तदीयसबहुमानवीक्षणपात्रभावाय तद्ग्रन्थनामादिकमनुल्लिखन्तस्तूष्णीम्भावमाश्रयन्ति । तादृशी च सरणिर्विश्वेश्वरशास्त्रिणा समवलम्बिता दृश्यते । तेनेदमनुमितं यच्छास्त्रिमहाशयस्त्वीयगोष्ठ्यां स्वबुद्धिबलविस्फूर्जनानेतान् विरोधाभासान् प्रकाशयति · इति । न खल्वनेन विरोधा एते विरोधवरूथिनीकारेण समुद्भाविता इति कुत्रचिल्लिखितम् । नवाऽनेन कुत्रचित्तथोक्तमिति सुवचम् ।

यच्च " विमतिपधाच्चासमञ्जसम् " इति सूत्रानुपूर्व्यां विलेखनीयायां " विप्रतिषेधाच्चासामञ्जस्यम् " इति सूत्रानुपूर्वी विश्वेश्वरशास्त्रिणा लिखितेति विरोधपरिहारकृतोक्तं समादधता खण्डनकारेण—

" भवदाचार्यैरद्य यावत् प्राचीनपुस्तकेष्वनुपलभ्यमानानि सूत्राणि यथा कानिचित्प्रकाशितानि कुत्रचित्पाठभेदोऽपि कृतः । तावता च न तेपाठभेदाः सूत्राणि वा न सन्तीति केनाचिद्वक्तुं शक्यम् । तद्वदेवास्मदीयप्राचीनलिखितपुस्तकेषु ' असमञ्जसम् ' इतिस्थाने ' असामञ्जस्यम् ' इति पाठमुपलभ्य यदि नाम तथा विलिखितम्, तावता ' अन्यादृशं वेदान्तदर्शनज्ञानमस्य व्यक्तीभवतीत्युपहासकरणं न प्रेक्षावत्त्व शोभते "-इत्युक्तम् ।

तत्र ब्रूमः—सत्यं तैस्तै र्भाष्यकारैर्भिन्नभिन्नपाठानि सूत्राणि पठितानि । अन्यभाष्यकारापठितानि च कानिचित्सूत्राण्यपि पठितानि । को नु खलु प्रसङ्गोऽस्य विषयस्येदानीम् । न खलु कोऽपि श्रीशङ्करभाष्योदाहृतसूत्रानुपूर्वी दुष्टेति कथयति । अपि तु विश्वेश्वरशास्त्रिपठितानुपूर्वी न तथा भवतीति । यः खलु सूत्रपाठः श्रीशङ्कराचार्यादृतः तथान्यैश्च भाष्यकारैस्समादृतस्तं पाठं परित्यज्यान्यादृशस्य पाठस्यादरणे को[illegible] प्रबलतरो हेतुस्समुपस्थितोऽभूत्, येनेवं शास्त्रिणा स्वगृहस्थिते प्राचीनतमे पुस्तकेऽन्विष्यापूर्वः कश्चित्पाठस्समाविष्कृतो निबद्धश्च ? किं श्रीशङ्कराचार्यादृते पाठे कोऽपि महान् दोषोऽपरिहरणीयोऽस्ति, येनेवं शास्त्रिणा प्राचीनपाठान्वेषणप्रयासोऽङ्गीकृतः । अहो नु खलु भोः समाधानवैखरी खण्डनकृतोऽन्धादृशी । न खलु वयमस्मद्भाष्यकारादृतपाठभिन्नत्वाच्छास्त्रिणा पठितः पाठो दुष्ट इति ब्रूमः । यः पाठः श्रीशङ्कराचार्याणामभिमत स्ततोऽप्ययं विलक्षणः पाठो भाष्यादिकमनालोच्य शास्त्रिणा लिखित इत्येतावदेव वदामः ।

यच्च—खण्डनकृता—"विप्रतिषेधाच्चासमञ्जसम् इति खलु सांख्याधिकरणसूत्रं" इति विरोधपरिहारगतं वाक्यमाक्षिपतोक्तम्—

"अत्र च 'विप्रतिषेधाच्चासमञ्जसम्' इति खलु सांख्याधिकरणान्तर्गतं सूत्रमिति वक्तव्ये यत् सांख्याधिकरणसूत्रमिति प्रत्यपादि, तद्भवतोऽसाधारणमधिकरणज्ञानमभिव्यनक्ति । 'रचनानुपपत्तेश्च नानुमानम्' इत्येतदेकच्छाधिकरणसूत्रम् । 'विप्रतिषेधात्' इत्यादि सूत्रन्तु 'अन्तिमं सूत्रमिति

कथमधिकरणसूत्रपदवाच्यं भवेदिति निष्पक्षपाताः सुधिय एव विचारयन्तु।"—इति।

अत्र ब्रूमः—"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्॥" इति, "विषयसंशयश्चैव विचारो निर्णयस्तथा। प्रयोजनेन सहितमेतत्स्यादङ्गपञ्चकम्॥" इति चोक्तरीत्या पञ्चाङ्गमधिकरणं भवति। आवश्यकतानुसारेण चाधिकरणान्येकानेकसूत्रकाणि भवन्ति। क्वचित्पूर्वपक्षसूत्रमेव न भवति, केवलं सिद्धान्तसूत्रमेव च भवति। क्वचिच्च पूर्वपक्षसूत्रम्, सिद्धान्तसूत्रम्, पूर्वपक्षयुक्तिसूत्रम्, सिद्धान्तयुक्तिसूत्रं च पृथगेव भवति। यावद्भिस्सूत्रैः पूर्वपक्षसिद्धान्तादिकं प्रतिपाद्यते तावन्ति सूत्राणि सम्मिलितान्यधिकरणतामापद्यन्ते। नतु केवलं सिद्धान्तसूत्रमात्रेऽधिकरणत्वं पर्यवस्यति। अतएवास्याधिकरणस्य पूर्वपक्षसूत्रमिदं सिद्धान्तसूत्रमिदमिति तुल्यतया व्यवहारो भवति। अधिकरणसम्बन्धित्वं च तदधिकरणान्तर्गतानां सर्वेषां सूत्राणामविशिष्टम्। तथा च सिद्धान्तसूत्रस्येव पूर्वपक्षादिसूत्राणामपि तदधिकरणसूत्रत्वव्यवहारो नानुपपन्नः। आदिमं सूत्रमेवाधिकरणसूत्रमिति नास्ति कोऽपि निर्बन्धः। आदिमस्येवान्तिमस्य मध्यगतानां च सूत्राणामधिकरणसम्बन्धित्वेऽविशिष्टे सत्यादिमस्यैवाधिकरणसूत्रत्वं नान्तिमस्येति नियमे मानाभावात्। अथोच्येत—अधिकरणसिद्धान्तसूत्रमेवाधिकरणसूत्रत्वेन व्यवह्रियते, सिद्धान्तसूत्रं च सर्वत्राधिकरणेष्वादिममेव भवति, यथा—ईक्षत्यधिकरणानन्दमयाधिकरणाकाशाधिकरणादिषु, तेषु हि

" ईक्षतेर्नाशब्दम् " " आनन्दमयोऽभ्यासात् " " आकाशस्तल्लिङ्गात् " इत्यादि सिद्धान्तसूत्राणि तत्तदधिकरणादिमसूत्राण्येव दृश्यन्ते, तथा चान्तिमसूत्रेष्वधिकरणसूत्रत्वव्यवहार एव नाङ्गीक्रियत इति। तदयुक्तम्—सर्वत्राधिकरणादिमसूत्रस्यैव सिद्धान्तसूत्रत्वमिति नियमस्यैवासम्भवात्। बहुष्वधिकरणेष्वादिमसूत्रस्य सिद्धान्तसूत्रत्वाभावात्। "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः" इति द्वितीयाध्यायप्रथमपादीयसप्तमाधिकरणे " अधिकं तु भेदनिर्देशात् " इति द्वितीयसूत्रस्य, " न प्रयोजनवत्त्वात्" इति द्वितीयाध्यायप्रथमपादीयैकादशाधिकरणे "लोकवत्तु लीलाकैवल्यम्" इति द्वितीयसूत्रस्य च श्रीशङ्करभाष्ये सिद्धान्तसूत्रत्वदर्शनात्। अधिकरणसम्बन्धित्वे पूर्वपक्षसिद्धान्तादिसूत्राणामविशिष्टे क्वचित्तदधिकरणसूत्रत्वव्यवहारः क्वचित्तु नेति नियमस्य निर्मूलत्वाच्चेति।

"विशेषवरूथिनी" इति लेखितव्ये थकारस्थाने धकारो लिखितः परिहारकृतेति खण्डनकारः परिहारकृदुपरि दोषमाह, तत्राक्षरव्यत्यासोऽक्षरसंयोजकशोधकादिप्रमादकृत इति सुखावगमेऽस्मिन्नर्थेऽस्य दोषस्य परिहारकृदुपर्यारोपणमनुचितं विदुषां मनसे न रोचते। एवं नाम परिहारकृतोऽक्षरव्यत्यासदोषं प्रदर्शयता खण्डनकृता 'लेखितव्ये' इति प्रयोक्तव्ये 'लिखितव्ये' इति प्रयुञ्जानेनात्मनोऽपि महावैयाकरणत्वं प्रकाशितमेवेति मन्यामहे वयम्।

यद्यपि केचित्प्राचीना 'लिखनम्' 'लिखितव्यम्' इत्यादयः प्रयोगा उपलभ्यन्ते, तथापि ते प्रामादिका एवेति प्रामाणिका मन्यन्ते।

यद्यपि च—" गाङ्कुटादिभ्योऽञ्णिन्डित् " इत्यत्र कुटादिपदस्य कुट आदिर्येषां ते कुटादयः कुटस्य आदिः कुटादिः कुटादिश्च कुटादयश्च कुटादयः—इति समासद्वयमाश्रित्य कुटपूर्वस्य लिखधातोरपि ग्रहणाल्लिखनमिति प्रयोगस्सिद्ध्यतीति केचिदाहुः, परंतु, 'गाङ्लिखादिभ्य' इति सूत्रयितव्ये कुटादिभ्य इति पठनस्य स्वारस्यभङ्गापत्तेः,"शकुनिष्वालेखने" इति सौत्रप्रयोगविरोधात्, वृत्तिकार हरदत्तादिग्रन्थविरोधापत्तेश्चायुक्तोऽयं पक्ष इति स्थितं प्राचां ग्रन्थेष्विति नात्राधिकं प्रपञ्च्यते।

" शास्त्रमात्रस्य शास्त्रेण निषेधे समानबलत्वाद्बाध्यबाधकभावासम्भवादनन्यगत्या षोडशिग्रहणाग्रहणवद्विकल्प एवाश्रयितव्यः, वस्तुनि विकल्पासम्भवाद्विरोध एवापद्यते "—इति विश्वेश्वरशास्त्रिण उक्तिः। विरोधपरिहारकृता चात्रैवमुक्तम्—शास्त्रमात्रस्यापि शास्त्रेण बाध्यत्वं भगवता शङ्कराचार्येणारम्भणाधिकरणे भाषितम्। अपच्छेदन्यायेन भेदावलम्बिनः पूर्वशास्त्रस्य परेणाभेदशास्त्रेण बाध्यत्वमद्वैतसिद्धान्तिनामभिमतम्। ततश्च शास्त्रमात्रस्य शास्त्रेण बाध्यत्वासम्भवकथनं स्वाचार्यसिद्धान्तविरुद्धमिति। अत्राह खण्डनकारः—

" षोडशिग्रहणाग्रहणवत्समानबलशास्त्रद्वयबोधितयोर्विरुद्धयोर्बाध्यबाधकभावो न सम्भवतीति विकल्प आश्रयितव्यः। नह्येतावता शास्त्रस्य शास्त्रान्तरबाध्यत्वं नास्तीति तेन प्रतिपाद्यते। विरोधे हि बलीयसा दुर्बलं बाध्यत एव, यथा—'मा हिंस्यात्सर्वा भूतानि' इति सामान्यशास्त्रं विशेषशास्त्रेण 'अग्नीषोमीयं पशुमालभेत' इत्यनेन। अद्वैतशास्त्रेण च विधि-

निषेधशास्त्रं बाध्यते, कस्य हेतोः ? द्वयोरपि समानबलत्वाभावात् । अद्वैतशास्त्रं षड्विधतात्पर्यनिर्णायकलिङ्गैरवगमिताद्वैततात्पर्यमनन्यपरत्वेन प्रबलमिति युक्तो भेदसत्यत्वतात्पर्यशून्यस्य व्यावहारिकभेदमात्रेण सावकाशस्य दुर्बलस्य तेन बाध्यबाधकभावः । न च तथा षोडशिग्रहणाग्रहणप्रतिपादकयोः शास्त्रयोः प्राबल्यं दौर्बल्यं च, अतस्तत्र न बाध्यबाधकभावौ भवितुमर्हतीति विकल्पः पर्यवस्यति " इति ।

" शास्त्रप्राप्तस्य शास्त्रेण निषेधे समानबलत्वाद्बाध्यबाधकभावासम्भवात् " इति वाक्येन प्रापकप्रतिषेधकयोर्द्वयोश्शास्त्रत्वे तयोरेकेनापरस्य बाधो न सम्भवति, उभयोश्शास्त्रत्वेन समानबलत्वादित्येव स्वरसतोऽर्थोलभ्यते, तादृशस्थले चानन्यगत्या षोडशिग्रहणाग्रहणवद्विकल्पस्समाश्रयणीयो भवति, विकल्पश्च वस्तुनि न सम्भवति—इत्येव चोपरितनवाक्यस्य स्वरसलभ्योऽर्थः । ननु षोडशिग्रहणाग्रहणप्रतिपादकशास्त्रवत्समानबलशास्त्रद्वयबोधितयोर्बाध्यबाधकभावासम्भवाद्विकल्प इति विशेषबोधस्तादृशवाक्यलभ्यः । यदि खण्डनकारोक्त एवार्थो विवक्षितस्तदा खलु वाक्येनैवंविधेन भाव्यम्-समानबलयोर्विधिनिषेधशास्त्रयोर्बाध्यबाधकभावासम्भवाच्छोडशिग्रहणाग्रहणवद्विकल्पस्समाश्रयणीयः स्यात्, स च प्रकृते न सम्भवति, वस्तुनि विकल्पासम्भवात्, ततश्च तयोर्विरोधोऽपरिहार्यः, इति । पूर्वोक्तवाक्यात्कोऽर्थः स्वरसलभ्यः कश्च नेत्ययमर्थस्सहृदयहृदयैकवेद्य इति त एवात्रयुक्तमयुक्तं च विवेचयिष्यन्तीति न वयमत्र विशेषतो लेखिनीं चालयामः ।

यत्तु—"युक्तो भेदसत्यत्वतात्पर्यशून्यस्य व्यावहारिकभेदमात्रेण सावकाशस्य दुर्बलस्य तेन बाध्यबाधकभावः" इति ग्रन्थलेखनम्, तद्विदुषां हासाय भवति, युक्तस्तेन दुर्बलस्य बाध इति लेखनं शोभते, नतु बाध्यबाधकभाव इति । सहृदया इदं विवेचयन्तु ।

"माहिंस्यादिति" सामान्यशास्त्रं "अग्नीषोमीयं पशुमालभेत" इति विशेषशास्त्रेण बाध्यत इत्यपि मन्दं वचः, उभयोःपरस्परं विरोधस्यैवाभावेन बाध्यबाधकभावस्याभावात् । तत्र "मा हिंस्यात्सर्वा-भूतानि" इति वाक्यं सर्वभूतहिंसासामान्यनिषेधपरम् । "अग्नीषोमीयं पशुमालभेत" इति वाक्यं चेद्धिंसाविशेषविधायकं स्यात् तदा तयोर्द्वयोश्शास्त्रयोर्विरोधः स्यात् । न चैतदेवम्, "अग्नीषोमीयं पशुमालभेत" इत्यस्य यागविधायकतायाः "द्रव्यसंयोगाच्चोदना पशुसोमयोः" इति पूर्वतन्त्रद्वैतीयीकाधिकरणे समर्थितत्वात् ।

अद्वैतशास्त्रेण द्वैतशास्त्रस्य यादृशो बाधो ऽद्वैतिनामभिमतस्तादृशो बाधः कुत्रापि तान्त्रिकैः कस्यापि शास्त्रस्य सजातीयेन केनापि शास्त्रेण नाङ्गीक्रियते । व्यावहारिकातात्विक भेदपरत्वं खलु भेदशास्त्रस्याद्वैतवादिभिरुच्यते । तथात्वे शास्त्रस्यातात्विकमिथ्याभूतार्थप्रतिपादकत्वेन सर्वथाप्यप्रामाण्यं भवति । नचैवमप्रामाण्यं वैदिकवाक्येषु कस्याप्यङ्गीक्रियते । अर्थवादवाक्यानामपि प्रातीतिकार्थस्य क्वचित्प्रमाणान्तरविरुद्धत्वेनासत्यत्वेऽपि तात्पर्यविषयीभूतार्थसत्यत्वेन प्रामाण्यं व्यवस्थाप्यते । भेदप्रतिपादकश्रुतीनां तु प्रत्यक्षसिद्धभेदानुवादित्वमद्वैतिभिरुच्यमानं न केनापि प्रकारेण प्रामाण्यसंरक्षणायालम् ।

उत्सर्गापवादन्यायस्थलेऽप्यपवादशास्त्रेणोत्सर्गशास्त्रस्यैतादृशो बाधो नाङ्गीक्रियते । अपितु विशेषशास्त्रविषयातिरिक्ते सङ्कोचलक्षणो बाध एवाङ्गीक्रियते । नच तेनोत्सर्गशास्त्रस्याप्रामाण्यं भवति, उत्सर्गशास्त्रघटकसामान्यशब्दानामपवादशास्त्रघटकविशेषबोधक शब्दानुसारेण विशेषार्थपरतामात्रस्य स्वीकारेण तादृशस्थलेऽतात्त्विकमिथ्याभूतार्थप्रतिपादकत्वानङ्गीकारात् । कस्यापि शास्त्रस्य बाधमन्तरैव सर्वशास्त्रसमन्वयोपपत्तौ यादृशस्तादृशोऽपि वा बाधः शास्त्रस्य नाङ्गीकर्तव्यः । बाधमन्तरैव-सर्वशास्त्रसामरस्येनार्थनिर्णयश्च कृतः एवाचार्यैः ।

किंच-द्वैताद्वैतशास्त्रयोरपरिहार्यविरोधे सति खलु कस्यचिद्बाध्यत्वावश्यकतायामुपस्थितायां किं बाधकं किंच बाध्यमिति विवेचने बलाबलविवेचनेनाधिकबलस्य बाधकत्वं न्यूनबलस्य बाध्यत्वमित्यादिचिन्ता । उभयोरपि शास्त्रयो रविरोधस्योपपत्तौ कः प्रसंगो बाध्यबाधकभावस्य बलाबलविचारस्य वा ? अविरोधश्चोपपादितो मुख्यतयैवास्मदाचार्यैराकरेषु स्पष्टम् ।

किंच-भेदशास्त्रं भेदसत्यत्वतात्पर्यशून्यं व्यावहारिकमिथ्याभूतानर्थावहभेदमात्रेण सावकाशं चेति कल्प्यते तथाविधार्थप्रतिपादनेन शास्त्रस्य किं फलं सिद्ध्यति ? न खलून्मत्तप्रलापवदसम्बद्धं निरर्थकं निष्प्रयोजनं चार्थं प्रतिपादयति शास्त्रम् । मिथ्याभूतानात्त्विकार्थप्रतिपादनेन संसारिणामनर्थ एव खलु सम्पाद्यते । तथाविधशास्त्रार्थज्ञानेन संसारिणामनर्थप्राप्तिमन्तरा

नार्थमासिरसम्भाव्यते । सर्वं च शास्त्रं प्रयोजनपर्यवसायि भवति । तदेवमसदर्थप्रतिपादनेन शास्त्रस्य साधु संरक्षितं प्रयोजनपर्यवसायित्वम् । सर्वमिदं स्पष्टं प्राचीनाचार्यग्रन्थेष्विति नात्र विस्तरः क्रियते ।

"अथ च "पत्युरसामञ्जस्यात्" इति सूत्रेण वेदबाह्यपाशुपतागमगतपाशुपतादिमतानामप्रामाण्यं ब्रुवतां वेदविरुद्धागमादिप्रामाण्यं ब्रुवतां तदनुष्ठायिनां च मतमप्रामाणिकमित्यापादितम्" इति विश्वेश्वरशास्त्रिणा लिखितम्। विरोधपरिहारकृता चात्रैवमुक्तम्— 'पत्युरसामञ्जस्यादि' त्यधिकरणे श्रीशङ्करभाष्यानुसारेण वेदविरुद्धत्वेन कारणेन कस्याप्यागमस्यागमसिद्धस्य मतस्य वाऽप्रामाण्यं न साध्यते, अपितु असामञ्जस्येन कारणेन केवलनिमित्तकारणेश्वरवादः प्रतिषिद्ध्यते — इति । अत्र खण्डनकार एवमाह —

"यच्चाग्रे—शास्त्रिणः 'पत्युरसामञ्जस्यादि' त्यधिकरणार्थापरिज्ञानमूलकं दोषोद्घाटनं प्रकाशयितुकामेन भवता भगवत्पादभाष्यस्य कश्चनांशं समुद्धृत्य तद्भावोपवर्णनं, तज्जले निमज्जतोऽसहायस्य दूर्वावलम्बनमनुकरोति । अहो भवदीयाधिकरणार्थज्ञानम् । यच्छ्रुत्वा मन्यामहे—अवश्यमिदानीं सर्वे भवतां शिष्यतां यास्यन्ति ! एवंविधज्ञानवता भवता भाष्याक्षराणि स्वसम्प्रदायभाष्यं च नावलोकितमित्येव वक्तव्यं भवति ।, भवदीयभाष्यकारो हि पत्युरधिकरणस्योपक्रमे स्पष्टाक्षरैर्वेदविरोधात्पाशुपतागमस्याप्रामाण्यं

न्नूते । तथा च भाष्यम्—" कापिलकणादसुगतार्हतमतानाम-सामञ्जस्याद्वेदबाह्यत्वाच्च निःश्रेयसार्थिभिरनादरणीयत्वमुक्तम्। इदानीं पाशुपतमतस्य वेदविरोधादसामञ्जस्याच्चानादरणीय-तोच्यते ।" इति । तदेतद्भाष्यमनवलोक्यान्यथैवाधिकरणार्थं परिकल्प्य परपक्षं दूषयितुं प्रवर्तमानो भवान् स्वहस्तेन पादयोः कुठाराघातं कुर्वन्तमनुकरोति । येन हि दूषणेन परपक्ष आक्षिप्यते, तेनैव स्वोपजीव्यभाष्यमप्याक्षिप्तं स्यात् । नच भगवत्पादानामप्येतादृशोऽभिप्रायो यत् प्रकृतिनिमित्तयो-र्भिन्नत्वकथनेनैव पाशुपतागमस्याप्रामाण्यम् । किन्तु वेद-विरुद्धत्वादेव । अतएव " वेदबाह्येश्वरकल्पना तावदनेक-प्रकारा ।"—इत्यादि तदधिकरणोपक्रमभाष्यम् । एत-त्पादारम्भेऽपि च मुमुक्ष्वभिलषितं ब्रह्मज्ञानमेव प्रति-पादनीयं, किमिति परविद्वेषकरः परपक्षप्रतिक्षेपः क्रियते इत्याशङ्क्य न परपक्ष इति कृत्वा परपक्षप्रतिक्षेपप्रधानं प्रकरणमारभ्यते, किन्तु प्रथमाध्यायप्रतिपादितसमन्वयस्य प्रतिपक्षभूतत्वात्तानीतराणि दर्शनानि निराक्रियन्ते, इति ब्रुवाणो भाष्यकारः स्पष्टमेव वेदविरुद्धत्वमेव द्वितीयपादे निषेध्यत्वेन प्रतिपादितानां मतानां निराकरणीयत्वे कारण-मिति स्वाभिप्रायं प्रकाशयति । तदेतदापाततोऽप्यवलोक्य दूषणमभिदधतो भवतः न ह्येष स्थाणोरपराधः—यदेनमन्धो न पश्यति इत्यादि वाक्यगोचरता स्पष्टमभिव्यज्यते ।"- इति ।

अत्र ब्रूमः—विरोधपरिहारकृता हि विश्वेश्वरशास्त्रिणा स्वमतभाष्यकाराभिप्रायविरुद्धमुक्तमित्येव प्रतिपादितम्। विश्वेश्वरशास्त्रिणो वचनं तन्मतभाष्यकाराभिप्रायविरुद्धमित्येतच्च तद्भाष्याद्युदाहरणेन निरूपितम्। नतु स्वाभिप्रायेण वा स्वमतभाष्यकाराभिप्रायेण वा 'पत्युरसामञ्जस्यादि' त्यधिकरणप्रतिपाद्योर्थोऽयमित्युक्तम्। ततश्च भगवद्रामानुजपूज्यपादभाष्यानुसारेण 'पत्युरसामञ्जस्यादि' त्यधिकरणे वेदविरुद्धत्वेन कारणेनापि पाशुपतमतस्यानादरणीयतायाः प्रतिपाद्यत्वेऽपि विरोधपरिहारकारस्य न स्वमतभाष्यार्थानभिज्ञत्वं सिद्धयति। न खलु तत्र स स्वमतभाष्यानुसारेण तदधिकरणप्रतिपाद्यार्थनिर्धारणे प्रवृत्तः। अपितु श्रीशङ्करभाष्यानुसारेण तदधिकरणप्रतिपाद्यार्थं वर्णयित्वा तद्विरुद्धं शास्त्रिणः कथनमित्येतावन्मात्रकथने। ततश्च शास्त्रिणः पक्षस्य दूषणाय तन्मतभाष्यानुसारेणाधिकरणार्थं कथयति विरोधपरिहारकृति स्वमतभाष्यार्थानभिज्ञत्वविरुद्धभाषित्वादिवर्णनं खण्डनकृतोऽयुक्तमिति सिद्धं भवति।

यातु श्रीशङ्कराचार्याणामपि तस्मिन्नधिकरणे वेदविरुद्धत्वादेव हेतोः पाशुपतमतस्याप्रमाण्यं साध्यतयाभिमतमित्युक्तिः, सा प्रत्यक्षापलापरूपा तद्भाष्यार्थसम्यग्विचाराभावमूला च। यद्यपि केवलनिमित्तकारणेश्वरवादो वेदविरुद्धः, वेदान्तविहितब्रह्मैकत्वप्रतिपक्षभूतश्च। तत एवच वेदान्तिनामवश्यप्रतिषेध्यश्च। तथापि केवलनिमित्तकारणेश्वरवादो न वेदविरुद्धत्वेन हेतुनाऽनुपपन्न इत्युच्यते, अपितु तस्या-

मञ्जस्येन हेतुना । इदमेव श्रीशङ्कराचार्याणामभिप्रेतम् । इत्थं हि तदधिकरण श्रीशङ्करभाष्यम्—" पत्युरीश्वरस्य प्रधानपुरुषयोरधिष्ठातृत्वेन जगत्कारणत्वं नोपपद्यते । कस्मात् ? असामञ्जस्यात्" । इति । अत्र च " पत्यु रि' त्यारभ्य ' नोपपद्यते ' इत्यन्तं साध्याशनिरूपणपरम् । " असामञ्जस्यात् " इति च तत्र हेतुकथनम् । तथा चासामञ्जस्येन हेतुना प्रधानपुरुषयोरधिष्ठातृत्वेन पत्युरीश्वरस्य जगत्कारणत्वमनुपपन्नमित्युच्यते । असामञ्जस्यं च हेतुभूतं—न वेदविरुद्धत्वमयुक्तम् । किन्तु तादृशस्येश्वरस्य रागद्वेषादिमत्त्वेनेश्वरत्वमसङ्गादिरूपम् । उक्तं हि तत्र भाष्ये श्रीशङ्कराचार्यैः " किं पुनरसामञ्जस्यम् ? हीनमध्यमोत्तमभावेन हि प्राणिभेदान्विदधत ईश्वरस्य रागद्वेषादिदोषप्रसक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत " इत्यादि । तदधिकरणारम्भेऽपि पाशुपतागमस्य वेदविरुद्धत्वेनाप्रामाण्यं तस्मिन्नधिकरणे साध्यमित्यभिप्रायद्योतकं किमपि पदं न दृश्यते । " इदानीं केवलाधिष्ठात्रीश्वरवादः प्रतिषिध्यते " इति च तदधिकरणारम्भे भाष्यम् । इदं च येषां येषां मते केवलनिमित्तकारणमीश्वरस्तेषां सर्वेषामस्मिन्नधिकरणे निराकरणीयत्वमभिप्रेतमिति सूचयति । तेच माहेश्वराः सांख्याः पातञ्जला वैशेषिका अन्ये च । अत एव तदधिकरणप्रथमसूत्रव्याख्याने प्रथमतो माहेश्वरादिमतानुसारेण दूषणमुक्त्वा " अपि च प्रवर्तनालक्षणादोषाः, इति न्यायवित्समयः" इत्यादिना नैयायिकमतेन दूषणम्, " पुरुषविशेषत्वाभ्युपगमाच्च " इत्यादिना पातञ्जलमतेन दूषणं

चोक्तम् । अत एव च 'सम्बन्धानुपपत्तेश्च' इति द्वितीयसूत्र व्याख्यानान्ते "तस्मादनुपपन्ना साङ्ख्ययोगवादिनामीश्वर कल्पना । एवमन्यास्वपि वेदबाह्यास्वीश्वरकल्पनासु यथासम्भवमसामञ्जस्यं योजयितव्यम्," इति साङ्ख्ययोगादीनां मतेष्वसामञ्जस्ययोजनम्, "अधिष्ठानानुपपत्तेश्च" इति सूत्रव्याख्याने "ततश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य" इत्युक्तिश्च सङ्गच्छते । "वेदबाह्येश्वरकल्पनाऽनेकप्रकारा" इतिवाक्ये वेदबाह्यपदं माहेश्वरादिमतवादिनामीश्वरकल्पनासु वेदबाह्यत्वं बोधयदपि, तासां वेदबाह्यत्वेन कारणेनायुक्तत्वं न बोधयति । सूत्रे-"असामञ्जस्यात्" इति हेतुवाचकपदोपादानेनासामञ्जस्यस्यैव हेतुत्वावश्यम्भावात्। असामञ्जस्यं न वेदबाह्यत्वमयुक्तमभिमेतमिति च पूर्वमेवावेदितम् । वेदबाह्यानां मतानां निराकरणं वेदान्तप्रतिपाद्यपक्षप्रतिपक्षभूतत्वादेवावश्यकर्तव्यमापद्यत इति तु सर्वेषां वेदान्तिनामभिमतमेव। वेदबाह्यत्वाद्धेतोरिव 'तन्मतनिराकरणे वैदिकानां प्रवृत्ति' । नहि वेदानुकूलानि मतानि निराक्रियेरन् । परन्तु पादेऽस्मिन् साङ्ख्यादीनां यौक्तिकवादा युक्तिभिरेव निराक्रियन्ते-इति श्रीशङ्कराचार्याणामभिप्रायः। अत एवैतत्पादारम्भे-साङ्ख्यादिपक्षानां प्रतिक्षेपस्य "ईक्षतेर्ना शब्दम्" "कामाच्च नानुमानापेक्षा" इत्यादिसूत्रैः पूर्वमेव कृतत्वात्पुनरत्र तत्पक्षप्रतिक्षेपे पौनरुक्त्यमाशङ्क्य, तत्र तेषां वेदान्तवाक्यव्याख्यानान्ययुक्तानीति । समर्थितम्, इह तु तदीययुक्तिप्रतिषेधमात्रम् क्रियत इत्युक्तम्-"इह तु वाक्यनिर-

पेक्षः स्वतन्त्रस्तद्युक्तिप्रतिषेधः क्रियत " इत्यादिना । किंच पाशुपतागमस्य वेदविरुद्धत्वादेवाप्रामाण्यमिति कथयता खण्डनकृता कस्मिन् सूत्रे पाशुपतागमसिद्धः कोऽर्थः कस्य वेदवाक्यस्य विरोधादयुक्त इत्युक्तं सूत्रकृता भाष्यकृता वेति निरूपणीयम् । नवलोक्यिते । सत्यं भाष्यकारो वेदान्तसिद्धपक्षप्रतिपक्षभूतत्वादेव केवलनिमित्तकारणवादनिरासस्यावश्यकतां वक्ति । नतु वेदविरुद्धत्वात्केवलनिमित्तकारणेश्वरवादिपाशुपतागमो प्रमाणमिति वक्ति । तत्पक्षनिराकरणे वेदान्तिनां प्रवृत्तिर्वेदान्तपक्षप्रतिपक्षभूतत्वेन कारणेनेत्येतावदेव भाष्यकृतोच्यते । तथा चैतत्पादारम्भे भाष्यम्—"यद्यपीदं वेदान्तवाक्यानामैदम्पर्यं निरूपयितुं शास्त्रं प्रवृत्तम्, न तर्कैः शास्त्रवत्केवलाभिर्युक्तिभिः कंचित्सिद्धान्तं साधयितुं दूषयितुं वा प्रवृत्तम् । तथापि वेदान्तवाक्यानि व्याचक्षाणैः सम्यग्दर्शनप्रतिपक्षभूतानि साङ्ख्यादिदर्शनानि निराकरणीयानीति तदर्थः परः पादः प्रवर्तते । " इति ।

यत्तु " वेदविरुद्धानां स्मृत्यादीनामप्रामाण्यं हि पूर्वकाण्डे विरोधाधिकरणे समर्थितम् " इति परिहारकृदुक्तं खण्डयता खण्डनकारेण—

" इत्युक्तिस्तु तवैव शोभते । यतो ऽनयोक्त्या किं वेदविरुद्धत्वेन स्मृतीनामप्रामाण्यसाधने पौनरुक्त्यं वस्तुमध्यवसितोऽसि । तथा सति ' स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ' इत्यादिसूत्रैर्वेदविरुद्धानां स्मृती-

नामप्रामाण्यप्रदर्शनाय प्रवृत्तः श्रीभाष्यकारोऽपि त्वया प्रतिक्षिप्तः स्यादिति– ' श्रुतिविरुद्धा कपिलोपलब्धिर्भ्रान्तिमूलेति न तया यथोक्तो वेदान्तार्थश्चालयितुं शक्यते, इति तत्रत्यभाष्याक्षराणि दुष्टानि प्रसज्येरन् "–इत्युक्तम्।

तत्र वदामः–स्मृत्यधिकरणं वेदविरुद्धानां स्मृतीनामप्रामाण्यसाधनाय न प्रवृत्तम्। पूर्वतन्त्रे विरोधाधिकरण एव तथाविधानां स्मृतीनामप्रामाण्यस्य समर्थितत्वात्। तावन्मात्रसाधनाय प्रवृत्तौ पौनरुक्त्यप्रसङ्गात्। किन्तु साङ्ख्यस्मृतिविरोधेन प्रथमाध्यायनिरूपितं ब्रह्मणो जगत्कारणत्वं चालयितुं शक्यते न वेति परीक्षणार्थं तदधिकरणं प्रवृत्तम्। पूर्वतन्त्र एव वेदविरुद्धानां स्मृतीनामप्रमाणत्वे सिद्धेऽपि अधिकाशङ्कया तदधिकरणोत्थानमिति ह्याचार्याणामभिप्रायः। यद्यपि पूर्वतन्त्रे " विरोधे त्वनपेक्षं स्यादसति ह्यनुमान " मिति प्रत्यक्षश्रुतिविरुद्धानां स्मृतीनामप्रामाण्यं समर्थितम्, परन्तु यत्र श्रुतीनामर्थनिर्णय. स्मृतिन्यायनिरपेक्षं स्वत एवाव्याकुलत्वेन भवति तत्र तादृशश्रुतिविरुद्धानां स्मृतीनामनपेक्षत्वं भविष्यति, वेदान्तवाक्यानामर्थस्य नानाशिरस्कत्वेन व्याकुलतया स्वत एव स्मृतिन्यायनिरपेक्षमसम्भवात् स्मृत्यनुसारेणैव तदर्थनिर्णयस्य कर्तव्यतया ब्रह्मणो जगत्कारणत्वे कपिलस्मृतिविरोधात्तदुपबृंहणानुसारेणैव वेदान्तार्थस्य निश्चेतव्यतया प्रथमाध्यायनिरूपितं ब्रह्मणो जगत्कारणत्वमनुपपन्नम् इत्यधिका शङ्का तत्राभिप्रेता। श्रुतेरयमर्थ इति निर्णयानन्तरं खलु स्मृतीनां श्रुतिविरुद्धत्वं निर्णेयम्। श्रुत्यर्थनिर्णयस्य स्मृतिसापेक्षत्वे

यत्स्मृत्यनुसारेण यस्याः श्रुतेरर्थनिर्णयः कृतः कथं तादृशश्रुतिविरोधेन तत्स्मृतेरप्रामाण्यं साध्यताम् । ततश्च स्मृतिनिरपेक्षमेव यासां श्रुतीनामर्थनिर्णयो भवति तादृशप्रत्यक्षश्रुतिविरुद्धानां स्मृतीनामप्रामाण्यमेव विरोधाधिकरणे समर्थितम् । प्रकृते च वेदान्तार्थस्य नानाशिरस्कत्वेन व्याकुलतया स्वतोनिर्णयासम्भवेन स्मृतिसापेक्षत्वात् कपिलस्मृत्यनुसारेन वेदान्तार्थनिर्णय एव कर्तव्यः, न तु सन्दिग्धार्थश्रुतिविरोधेन कपिलस्मृतेरप्रामाण्यं वक्तव्यमित्यधिकाशङ्का भवतीति तात्पर्यम् । तथा च भाष्यम्—" कथं स्मृतिविरोधाच्छ्रुतेरन्यपरत्वम् ? उक्तं हि विरोधेत्वनपेक्ष्यं स्यादिति श्रुतिविरुद्धायास्स्मृतेरनादरणीयत्वम् । सत्यम्—औदुम्बरीं स्पृष्ट्वोद्गायेदित्यादिषु स्वत एवार्थनिश्चयसम्भवात्तद्विरुद्धास्मृतिरनादरणीयैव । इहतु वेदान्तवेद्यतत्त्वस्य दुरवबोधत्वेन परमर्षिप्रणीतस्मृतिविरोधे सत्यपमर्थे इति निश्चयायोगात्स्मृत्या श्रुतेरतत्परत्वोपपादनमविरुद्धम् ।" इति । " स्मृत्यनवकाशदोषप्रसङ्ग इति चेत्" इति सूत्रखण्डेन वेदान्तानां ब्रह्मकारणत्वपरत्वे कपिलस्मृतेरनवकाशताप्रसङ्ग इति पूर्वपक्षमुद्भाव्य, "नान्यस्मृत्यनवकाशदोषप्रसङ्गात्" इति सूत्रशेषेण तत्परिहारः कृतः । कपिलस्मृत्यनवकाशत्वप्रसङ्गात्तदनुसारेण चेद्वेदान्तार्थनिर्णयः क्रियते, तदा मन्वाद्यन्यस्मृतीनामनवकाशत्वप्रसङ्ग इत्यर्थः । तथा च तदनुसारेणैव वेदान्तार्थनिर्णयः कर्तव्य इति तात्पर्यम् । अयमभिप्रायः—यद्यपि वेदान्तार्थस्य स्मृतिमनपेक्ष्य स्वतो निर्णयासम्भवात् स्मृत्यानुगुण्येनैव तन्निर्णयः कार्यः । तत्र कपिलस्मृत्यानुगुण्येनार्थनिर्णयः कार्योऽन्यस्मृत्यानुगुण्येन वेति

प्राप्ते मन्वाद्यन्यस्मृत्यानुगुण्येन तन्निर्णय एवयुक्त इत्यापद्यते । कपिलस्मृत्यनवकाशप्रसङ्गभिया तदानुगुण्येन चेदर्थनिर्णयः क्रियते तदा प्रथमाध्यायोक्तन्यायवैगुण्यम् । मन्वादिस्मृतीनामनवकाशत्वप्रसङ्गश्च । ताश्च बहुसंख्याकाः, परमाप्तमन्वादिमहर्षिप्रणीताश्च । ततश्च न्यायाननुगृहीताप्तमात्रकपिलप्रणीतैकस्मृत्यानुगुण्यापेक्षया न्यायानुगृहीतपरमाप्ततममन्वादिप्रणीतानेकस्मृत्यानुगुण्यमेवादरणीयम् । इति । " श्रुतिविरुद्धा कपिलोपलब्धिर्भ्रान्तिमूलेति न तया यथोक्तो वेदान्तार्थश्चालयितुं शक्यः" । इति भाष्यस्य चायमभिप्रायः—कपिलस्य स्वस्मृत्यनुसारिणी चेत्तत्त्वोपलब्धिररस्ति,तर्हि सा बहूनां स्मर्तॄणां तत्त्वोपलब्धिविरोधाद् भ्रान्तिरिति निश्चेतव्यमिति । तथाच तत्रत्या श्रुतप्रकाशिका " यदि कापिलस्य स्वस्मृतिप्रकारेणोपलब्धिरस्ति सा बहूनां स्मर्तॄणां तत्त्वोपलब्धिविरोधाद्भ्रान्तिरित्यर्थः " इति । तथा चास्मिन्नधिकरणे श्रुतिविरुद्धायास्स्मृतेरप्रामाण्यं न साध्यते, अपितु-वेदान्तानां परमाप्तभूतमन्वादिस्मृत्यानुगुण्येनैवार्थनिर्णयस्य कार्यत्वात्प्रथमाध्यायोक्तं ब्रह्मणो जगत्कारणत्वं कपिलस्मृतिविरोधेन न विचालयितुं शक्यत इत्युच्यते । फलतश्च कपिलस्मृतेर्भ्रान्तिमूलत्वं परं सिद्ध्यति । श्रुतिविरुद्धानां स्मृतीनामप्रामाण्यं तु पूर्वतन्त्र एव साधितं न पुनरत्र साध्यते । वेदान्तदीपे चायमर्थस्स्पष्टः । तथाच तत्रत्यो ग्रन्थः—" वेदान्तानां समस्तचिदचिद्वस्तुविलक्षणास्पृष्ट हेयगन्ध सर्वज्ञताद्यनन्तकल्याणगुणाकर ब्रह्मैकपरत्वं प्रतिपादितं कापिलस्मृतिविरोधेन चालयितुं शक्यं—उतनेति संशयः । शक्यमिति

"भगवता बादरायणेन द्वितीयपादे 'उत्पत्त्यसम्भवात्' इत्यादिचतुस्सूत्र्या पाञ्चरात्रतन्त्रस्य वेदविरुद्धत्वेनाप्रामाण्यस्य प्रतिष्ठापितत्वात्, तदनुयायिनाचाचार्यभगवत्पादेन स्पष्टीकृतत्वादित्यस्य सर्वजनप्रसिद्धत्वात्" इति।

अत्र वदामः—यः खलु भगवान् बादरायणश्शारीरकशास्त्रप्रणेता स एव महाभारतस्यापि प्रणेतेत्यविवादम् । महाभारते च शान्तिपर्वणि मोक्षधर्मेषु नारायणीये पाञ्चरात्रशास्त्रस्य प्रामाण्यं स्पष्टं व्यवस्थापितं दृश्यते । इत्थं महाभारते यस्य पाञ्चरात्रस्य प्रामाण्यं येन बादरायणेन व्यवस्थापितम्, स एवात्र तस्यैव शास्त्रस्याप्रामाण्यं प्रतिष्ठापयतीति कथमिदं सम्भवदुक्तिकं वा भवति। वस्तुतस्तु तेन पाञ्चरात्रशास्त्रस्य प्रामाण्यमेव संरक्षितमत्रापीति तु भगवद्भाष्यकारव्याख्यानेन सुस्पष्टम् । श्रीशङ्कराचार्यास्तु अद्वैतसिद्धान्तस्थापकाः पाञ्चरात्रशास्त्रस्य कार्त्स्न्येन प्रामाण्याङ्गीकारे स्वसिद्धान्तस्य मूलतो हानिः स्यादित्यनुपश्यन्तः शास्त्रस्यास्यांशिकमप्रामाण्यमसाधयन् । पाञ्चरात्रशास्त्रोक्तानां येषां जीवोत्पत्त्यादीनां वेदविरोधेन तदंशऽप्रामाण्यं श्रीशङ्कराचार्यैर्व्यवस्थापितम्, ते जीवोत्पत्त्यादयोऽर्था न कुत्रापि तस्मिन् शास्त्रे प्रतिपाद्यन्ते । प्रत्युत तद्विरुद्धा जीवनित्यत्वादय एव प्रतिपाद्यन्त इति तत्त्वस्थितिः । अत एव भगवद्रामानुजाचार्यपादाः श्रीशङ्कराचार्योक्तानर्थान् प्रतिक्षिपन्तो भगवद्बादरायणाभिमतपाञ्चरात्रप्रामाण्यव्यवस्थापनपरतयैव तेषां सूत्राणां व्याख्यानमकार्षुः । स्पष्टमिदं पाञ्चरात्रशास्त्राभिज्ञानां श्रीभाष्यग्रन्थाध्यायिनाञ्च । एवं स्थिते वस्तुतत्त्वे-

भगवद्बादरायणेन पाञ्चरात्राप्रामाण्यं व्यवस्थापितमिति, तदनुयायिनां भगवद्रामानुजाचार्यपादानाम्मतमप्यप्रमाणमिति घोषोऽयं समुद्रघोषतुल्य एवावतिष्ठते।

यदप्युक्तं खण्डनकृता—

"यद्यपि श्रीभाष्यकारैरेषा चतुस्सूत्री पाञ्चरात्रमतस्य प्रामाण्यसाधनपरत्वेनैव योजिता, तथापि प्रामाण्यसाधनं न तदर्थः, तथा सति पादासङ्गतिप्रसङ्गात्। अयं हि द्वितीयः पादः स्वातन्त्र्येण परपक्षाणामनपेक्ष्यत्वसाधनायैव प्रवृत्त इति भवदीयभाष्यकारैरेवाभिहितम्। तत्कथमकाण्डे स्वमतस्थापनं कर्तुं प्रवृत्तस्सूत्रकारः। तत्तु प्रथमाध्यायसङ्गतम्। अतएव तस्य समन्वयाध्याय इति संज्ञा। द्वितीयाध्यायश्चाविरोधाध्यायः। तत्रच प्रथमपादे स्वपक्षे स्मृतिन्यायविरोधपरिहारोऽभिहित इति केवलं द्वितीयपादेन परपक्ष एव निषेध्य इति तस्मिन्नेव पादे स्वपक्षस्थापनमसङ्गतमेव"—इति।

तत्रोच्यते—"उत्पत्त्यसम्भवात्" इत्यादिचतुस्सूत्री पाञ्चरात्राप्रामाण्यशङ्कातन्निवारणपरतया व्याख्याता भगवद्रामानुजाचार्यपादैः। तच्छास्त्राप्रामाण्यस्थापनपरत्वेन यदन्येषां व्याख्यानं तत्सूत्राक्षराननुगुणं सूत्रकाराभिप्रायविरुद्धं चेति स्पष्टं प्रमाणयुक्तिभिर्निरूपितश्च। तथा च तस्मिन्नधिकरणे पाञ्चरात्रप्रामाण्यं सुष्ठु व्यवस्थापितम्।

यत्तु—प्रामाण्यसाधनस्य तदर्थत्वे पादासङ्गतिप्रसङ्ग इति। तन्न, तन्त्रान्तरसामान्यात्पाञ्चरात्रशास्त्रेऽप्यप्रामाण्यमाशङ्क्य प्रसङ्गादेव तत्प्रामाण्यव्यवस्थापनेन पादसङ्गतेरनावश्यकत्वात्। तदिदमुक्तं

श्रीभाष्ये—"उत्पत्त्यसम्भवात्" इति सूत्रव्याख्याने—"कपिलादितन्त्रसामान्याद्भगवदभिहितपरमनिःश्रेयससाधनावबोधिनि पाञ्चरात्रतन्त्रेऽप्यप्रामाण्यमाशङ्क्य निराक्रियते" इति । भवति चैवं प्रसङ्गाद्दर्शनान्तरस्यापि निरूपणमन्यत्रापि । यथा प्रथमाध्याय तृतीयपादे ब्रह्मविद्यायां देवादीनामधिकारनिरूपणम्, शूद्रादीनामनधिकारनिरूपणञ्च । इत्थं प्रसङ्गादेव पाञ्चरात्रप्रामाण्यस्य व्यवस्थापितत्वात् सूत्रकारस्य प्रवृत्तिर्नाकाण्डे ताण्डवायते, अपितु खण्डनकारस्यैव प्रवृत्तिरकाण्डे ताण्डवायते ।

पाञ्चरात्रप्रामाण्यव्यवस्थापनस्य प्रथमाध्याये सङ्गतत्वोक्तिरपि खण्डनकृतोऽविचारितरमणीया । समन्वयाध्याये ब्रह्मणो जगत्कारणत्वनिरूपणपरे पाञ्चरात्रशास्त्रप्रामाण्यव्यवस्थापनस्य सङ्गतत्वाभावात् । न खलु पाञ्चरात्रशास्त्रप्रामाण्यव्यवस्थापनं ब्रह्मणो जगत्कारणत्वव्यवस्थापनोपयोगि, येन तत्रास्य सङ्गतिस्स्यात् ।

द्वितीयपादेन केवलं परपक्ष एव निषेध्य इत्यप्यसङ्गतम्; स्वपक्षदोषसमाधानस्यापि, क्रियमाणतादर्शनात् । "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इत्यस्मिन्नधिकरणेहि परमाणुकारणवादिभिर्ब्रह्मकारणवादिनि यो दोषस्समुद्भावितस्तत्समाधानं क्रियत इति 'श्रीशङ्करभाष्यप्रक्रिया । तथा च तदधिकरणारम्भभाष्यम्—"तत्रादौ तावद्योऽणुवादिना ब्रह्मवादिनि दोष उत्प्रेक्ष्यते स प्रतिसमाधीयते" इति ।

यत्तु टिप्पण्यां "अयं भावः" इत्यारभ्य महता प्रपञ्चेन पाञ्चरात्रप्रामाण्यव्यवस्थापने स्वोक्तिविरुद्धत्वादिदोषोद्भावनं, खण्डन-

कारेण कृतम्, तत्रोच्यते । " महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् " इति सूत्रे श्रीमद्भिः शङ्कराचार्यैः ब्रह्मकारणवादे परमाणुकारणवादिभिस्समुद्भावितानां दोषाणां समाधानपरतया व्याख्यानम् । तदिदं व्याख्यानमसङ्गतमिति भगवद्रामानुजाचार्यपादैस्तत्सूत्रव्याख्याने निरूपितम् । ब्रह्मकारणवादे परोक्तानां दोषाणां पूर्वस्मिन् पाद एव परिहृतत्वादत्र पुनस्तत्करणमसङ्गतं पौनरुक्त्यदोषग्रस्तं चेत्येतावदेव तैस्तत्रोक्तम्, न तु सामान्यतस्स्वमतदूषणपरिहारेण स्वमतप्रतिष्ठापनं न सूत्रार्थ इति । स्पष्टं चेदं तत्रत्यभाष्ये । इत्थञ्च तद्भाष्यम्—" यत्तु परैः ब्रह्मकारणवाददूषणपरिहारपरमिदं सूत्रं व्याख्यातम्, तदसङ्गतम्, पुनरुक्तश्च । ब्रह्मकारणवादे परोक्तान् दोषान् पूर्वस्मिन् पादे परिहृत्य परपक्षप्रतिक्षेपो ह्यस्मिन् पादे क्रियते । चेतनाद्ब्रह्मणो जगदुत्पत्तिसम्भवश्च ' न विलक्षणत्वादि ' त्यत्रैव प्रपञ्चितः " इति । अत्र च ब्रह्मकारणवादे परोक्तानां दोषाणां परिहारपरत्व एवासाङ्गत्यं पौनरुक्त्यं चोक्तम् । नतु सामान्यतः स्वमतोपरि परोद्भावितानां दोषाणां परिहारपरत्वेऽपि । " उत्पत्त्यसम्भवात् " इत्यादि चतुस्सूत्र्याश्च न ब्रह्मकारणवादे परोद्भावितानां दोषाणां परिहारपरतया व्याख्यानं कृतम्, अपि तु पाञ्चरात्रशास्त्रस्याप्रामाण्यमाशङ्क्य तन्निराकरणपरतया । ततश्च का कथासाङ्गत्यस्य पौनरुक्त्यस्य वा । प्रसङ्गाच्चेदं कृतमिति च पूर्वमेवोक्तम् । अतश्च स्वोक्तिविरुद्धत्वदूषणोद्भावनमयुक्तमित्येव सिध्यति ।

यदपि टिप्पण्यां—' विप्रतिषेधाच्चासमञ्जसम् ' इति सूत्रं

सर्वेष्वेवाधिकरणेष्वनुवर्तते—इत्युक्तम्। तदयुक्तम्, अस्य नियमस्य "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इत्यधिकरण एव परित्यक्तव्यत्वात्। तद्ध्यधिकरणं श्री शङ्कराचार्यैः परमाणुकारणवादिभिर्ब्रह्मकारणत्वादिनि समुद्भावितस्य दोषस्य समाधानाय प्रवृत्ततया भाषितम्। नच तत्रास्य "विप्रतिषेधाच्चासमञ्जसम्". इति सूत्रस्यानुवर्तनं सम्भवति, तस्याधिकरणस्य परपक्षप्रतिक्षेपपरत्वाभावात्। तथात्वे सति हि विप्रतिषेधाच्चासमञ्जसं तद्दर्शनमित्यर्थस्समन्वितस्स्यात्।

यदपि—"तदनुसारेण 'विप्रतिषेधाच्च' इत्यन्तिमसूत्रस्यापि भगवत्पादोक्तार्थपरत्वमेव न्याय्यम्। न तु जीवोत्पत्तिप्रतिषेधपरत्वम्" इति। तदपि न, सर्वेष्वधिकरणेषु साङ्ख्याधिकरणस्थस्य 'विप्रतिषेधाच्चासमञ्जसम्, इति सूत्रस्यानुवृत्तिरिति नियमस्य महद्दीर्घाधिकरण एव श्रीशङ्करभाष्यानुसारेण व्यभिचारादस्मिन्नधिकरणे तदनुवृत्तेरेवासिद्धौ तदानुगुण्यस्याकिञ्चित्करत्वात्। तत्राधिकरणेऽपि वा 'विप्रतिषेधात्' इत्यस्य वेदविप्रतिषेधार्थकतया व्याख्यानेऽनन्यथासिद्धप्रमाणाभावेन तत्रैव तदर्थकत्वासिद्धौ तदानुगुण्येनैतदधिकरणस्थस्य 'विप्रतिषेधाच्च' इति सूत्रस्य वेदविप्रतिषेधार्थकताया असिद्धेः। उत्पत्त्यसम्भवाधिकरणे "विज्ञानादिभावे वा तदप्रतिषेधः" इत्यस्य सूत्रस्य वाकारतदप्रतिषेधपदस्वारस्यानुगुण्येन सिद्धान्तपरतया तदुत्तरस्थस्य 'विप्रतिषेधाच्च' इत्यस्य सिद्धान्तानुगुणजीवोत्पत्ति विप्रतिषेधपरतया एव युक्तत्वात्। पाञ्चरात्रे गुणगुण्यादिकल्पनरूपविप्रतिषेध वेदविप्रतिषेधयोरभावस्य प्रत्यक्षमुपलभ्यमानतया,

तदर्थकताया असङ्गतत्वाच्च । निरूपितश्च भगवद्रामानुजाचार्यपादैः पाञ्चरात्रे विप्रतिषेधाभावस्तत्सूत्रभाष्ये ।

एतेन टिप्पण्या "नन्वि" त्यादिना "सिद्धान्त" इत्यन्तेन ग्रन्थेन कृतस्सर्वोऽपि कोलाहलो निर्मूलो निरस्तो वेदितव्यः । "विप्रतिषेधाच्चासमञ्जसम्" इति सूत्रानुवृत्तेरेवासम्भवात्, उत्पत्त्यसम्भवाधिकरणस्थस्य "विप्रतिषेधाच्च" इति सूत्रस्य वेदविप्रतिषेधार्थकत्वासम्भवाच्च । अयमर्थश्चोपरि निरूपितोऽस्माभिः ।

यच्च टिप्पण्या— "आचार्यभगवत्पादेन" इत्यादिना श्रीमच्छङ्कराचार्येण "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इत्यधिकरणस्य ब्रह्मकारणवादे परोद्भावितदूषणसमाधानपरतया व्याख्यानमाशङ्क्य वैशेषिकमतासामञ्जस्यकथनतात्पर्योन्नियनम्, तदयुक्तम्, भाष्यतद्व्याख्यानादिषु स्पष्टमेव तस्याधिकरणस्य स्वपक्षदूषणसमाधानपरतया वर्णितत्वात् । श्रीशङ्करभाष्ये तावत् "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इति सूत्रावतरणिकायामित्थमुक्तम्— "तत्रादौ तावद्योऽणुवादिना ब्रह्मवादिनि दोष उत्प्रेक्ष्यते स प्रतिसमाधीयते" इति । रत्नप्रभाव्याख्यायाञ्च— "वृत्तानुवादेन 'महद्दीर्घवत्' इति स्वमतस्थापनात्मकाधिकरणस्य सङ्गतिमाह, (प्रधानेति) यद्यपि साङ्ख्यमतनिरासानन्तरं परमाणुवादो निराकर्तव्यः, स्वमतस्थापनस्य स्मृतिपादे सङ्गतत्वात्, तथापि पूर्वत्र प्रधानगुणानां सुखादीनां जगत्यनन्वयात्प्रधानस्यानुपादानत्वमुक्तम् तथा

ब्रह्मगुणचैतन्यानन्वयाद्ब्रह्मणोऽपि नोपादानत्वमिति दोषो दृष्टान्तसङ्गतिलाभादत्र समाधीयत इत्यर्थः" इतिग्रन्थे शङ्कापूर्वकमस्याधिकरणस्य स्वमतस्थापनात्मकत्वं व्यवस्थापितम्। आनन्दगिरीये व्याख्याने च- "स्वपक्षदोषनिरासस्य स्मृतिपादसम्बन्धेऽपि प्रधानगुणानन्वयान्न चेज्जगत्तत्प्रकृतिकं तर्हि ब्रह्मविशेषगुणानन्वयान्न तत्प्रकृतिकमपि स्यादित्यवान्तरसङ्गतिलाभादिहेदमधिकरणमिति भावः। स्वपक्षदोषसमाधिद्वारा समन्वयदृढीकरणादध्यायादिसङ्गतयः" इति ग्रन्थेऽस्याधिकरणस्य स्वपक्षदोषनिरासपरत्वं स्वीकृत्यैव सङ्गत्यादिकं प्रदर्शितम्। भामत्यामपि "तत्र वैशेषिका ब्रह्मकारणत्वं दूषयाम्बभूवुः" इत्यारभ्य ब्रह्मकारणवादे वैशेषिकैरुच्यमानं दूषणं विस्तरेणोपपाद्य, "इति दूषणमदूषणाक्रियते व्यभिचारादित्याह" "महद्दीर्घवद्वा-ह्रस्वपरिमण्डलाभ्याम्" इति सूत्रावतरणिका दत्ता। "उभयथापि न कर्मातस्तदभावः" इति सूत्रभाष्ये च "इदानीं परमाणुकारणवादं निराकरोति" इति भाष्यकारैस्तस्यैव सूत्रस्य परमाणुकारणवादनिरासपरतोक्ता। तत्सूत्रभाष्यव्याख्यानान्यप्येतदर्थपराण्येव दृश्यन्ते। तस्मात् "महद्दीर्घवद्वा" इत्यादि सूत्रस्य स्वमतस्थापनार्थत्वेन योजितस्यापि तदर्थकत्वमित्यादिकथनं टिप्पणीकृतो वृथापरिश्रममात्रफलकं स्वपक्षरक्षणार्थव्यर्थप्रयत्नरूपमयुक्तमित्येवावगन्तव्यम्।

यत्तु खण्डनकृता-उत्पत्त्यसम्भवाधिकरणे "उत्पत्त्यसम्भवात्" "न च कर्तुः करणम्" इति द्वयोस्सूत्रयोः पूर्वपक्ष-

परतां "विज्ञानादिभावे वा तदप्रतिषेधः" "विप्रतिषेधाच्च" इति द्वयोस्सूत्रयोस्सिद्धान्तपरतां च भगवद्रामानुजाचार्यपादोक्तां दूषयता, तदर्थं पादस्यास्य परपक्षप्रतिषेधप्रधानतां व्यवस्थापयतोक्तम्—

"अस्मिन् पादे यावन्त्यधिकरणसूत्राणि वर्तन्ते तावन्ति नञ् घटितानि दृश्यन्ते, अनेनैव प्रत्यभिज्ञानेनायं पादः परपक्षप्रतिषेधप्रधान इति निश्चीयते" इति ।

अत्रेदं विचार्यते । अधिकरणसूत्राणीत्यधिकरणसिद्धान्तसूत्राणि खण्डनकृतो विवक्षितानि, तेषां सर्वेषां नञ्घटितत्वमस्तीति च स आह । तत्र नञ्घटितत्वमित्यसमस्तनञ्घटितत्वं विवक्षितम्—समस्तनञ्घटितत्वं वा, अन्यतरघटितत्वं वा? "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इत्यस्मिन् सिद्धान्तसूत्रे समस्तस्यासमस्तस्य वा नञो ऽदर्शनात्पक्षत्रयमप्यनुपपन्नम् । तत्र पूर्वाधिकरणान्तिमसूत्रात् "असमञ्जसम्" इति पदानुवृत्तिश्च तस्य सूत्रस्य श्रीशङ्करभाष्यानुसारेण स्वपक्षदूषणनिरासमात्रपरत्वादनुपपन्ना । ह्रस्वपरिमण्डलाभ्याम्—द्व्यणुकपरमाणुभ्यां, यथा, महद्दीर्घे—त्र्यणुकद्व्यणुके, उत्पद्येते, तथा चेतनादचेतनं जायते इति हि सूत्रार्थः, तत्रासमञ्जसमित्यनुवृत्तौ तदर्थस्य कुत्रान्वयः स्यात् । अतश्च तत्र सूत्रे नासमञ्जसपदानुषङ्गः । अनुषङ्गेऽपि वा ऽसमस्तनञ्पदाभावादाद्यः पक्षो दुष्टः । द्वितीयोऽपि पक्षोऽननुषङ्गपक्षे "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इत्यस्मिन् सिद्धान्तसूत्रे नञोऽभावाद्दुष्टः । अनुषङ्गो न

सम्भवतीति च पूर्वमेवोक्तम्। तृतीयोऽपि तत एव दुष्टः, तत्र समस्तस्यासमस्तस्य वा नञोऽभावात्।

यदपि खण्डनकृतोक्तम् —“ उत्पत्त्यसम्भवात् ” इति सूत्रमपि तद्वन्नञ्पदघटितम्, अत इदं कथं पूर्वपक्षसूत्रं भवेत्” इति।

अत्र वदामः—एवं कथयतः खण्डनकृतः यद्यन्नञ्पदघटितं सूत्रं तत्तत्सिद्धान्तसूत्रमिति नियमः कोऽप्यभिमत इति मतिभाति। तादृशश्च नियमोऽसम्भवी, नञ्पदघटितानां सूत्राणां सर्वेषां सिद्धान्तसूत्रत्वस्यायोगात्। सांख्याधिकरण एव “ रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ” इत्येकस्य सिद्धान्तसूत्रत्वेऽपि “अन्यत्राभावाच्च न तृणादिवत् ” इति सूत्रस्य नञ्पदघटितस्यापि सिद्धान्तसूत्रत्वाभावात्।

किञ्च—उत्पत्त्यसम्भवादित्यस्य यादृशं नञ्पदघटितत्वं तादृशं “ विज्ञानादिभावे वा तदप्रतिषेधः ” इत्यस्मिन्नपि सूत्रे वर्तत इति तस्यैव सिद्धान्तसूत्रत्वं कुतो न भवति।

यत्तु—“विज्ञानादिभावे वा” इति सूत्रे नञ्पदाभावेन तदधिकरणसूत्रं न भवितुमर्हति”—इति खण्डनकृतोक्तम्।

तदयुक्तम् “विज्ञानादिभावे वा ” इत्यस्मिन् सूत्रखण्डे नञोऽभावेऽपि “ विज्ञानादिभावे वा तदप्रतिषेधः ” इत्यस्मिन् पूर्णसूत्रे नञो घटकत्वात्। न च तस्मिन्सूत्रे नञ् नास्तीति वाच्यम्, “ उत्पत्त्यसम्भवादित्यस्मिन् सूत्रे असम्भवादिति समस्तपदघटकतयेव,

" विज्ञानादिभावे वा तदप्रतिषेधः " इत्यस्मिन्नपि सूत्रे " तदप्रतिषेध " इति समस्तपदघटकतया नञ्सत्त्वात्।

यत्तु-" अतः पारिशेष्यादस्यैव सिद्धान्तसूत्रत्वं वाच्यम्। तथा च सति स्वमतप्रतिष्ठापनार्थत्वेन सूत्रव्याख्यानं न शोभत इति पाञ्चरात्रमतस्याप्रामाण्यसाधनार्थमेवैषा चतुस्सूत्री प्रवृत्ता।"

इति खण्डनकारेणोक्तम्। तदयुक्तम्, तदुक्तरीत्यापि सिद्धान्त सूत्रत्वप्रयोजकस्य नञ्घटितत्वस्य " उत्पत्त्यसम्भवात् " इति सूत्र इव " विज्ञानादिभावे वा तदप्रतिषेधः " इत्यस्मिन्नपि सूत्रे सत्त्वेन पारिशेष्यस्यैवासिद्धेः। स्वमतप्रतिष्ठापनार्थत्वेन सूत्रव्याख्यानं तु सर्वत्रापि युज्यत एवेति पूर्वमेवोक्तमस्माभिः। महाभारते शान्तिपर्वणि मोक्षधर्मेषु नारायणीये महता प्रबन्धेन पाञ्चरात्रवैभवं प्रकाशितवतस्सूत्रकारस्य तदप्रामाण्यसाधनार्थं सूत्रप्रणयनासम्भवेनोक्तचतुस्सूत्र्यास्तत्प्रामाण्यव्यवस्थापनपरतैव च युक्ता।

यदपि-" वेदविरुद्धत्वांशस्य विवरणं तु भगवत्पादैरेव कृतमिति नेह तन्निरूपणाय प्रयत्यत " इति।

तदपि न, श्री शङ्कराचार्यैः प्रदर्शितस्य वेदनिन्दादिरूपस्य वेदविप्रतिषेधस्य वा, जीवोत्पत्त्यादेर्वेदविरुद्धार्थस्य वा कुत्रापि पाञ्चरात्रग्रन्थेऽदर्शनेन प्रत्युत जीवनित्यत्वादेरेव पाञ्चरात्रे प्रतिपादनदर्शनेन च पाञ्चरात्रे वेदविरुद्धांशसद्भावकथाया एव कल्पितत्वनिश्चयात्। *श्रीरामानुजभगवत्पादाचार्यैरेवायमर्थस्स्पष्टं विस्तरेण भाष्ये वर्णित*

इति न वयमपि विस्तराय प्रयतामहे ।

यत्तु–" अनेनैव निरूपणेन भवत्सम्प्रदाये वेदतुल्यप्रमाणत्वेनाभ्युपगतद्राविडभाषामयप्रबन्धस्य वेदविरुद्धत्वेनाप्रामाण्यं सुपपादितं भवति । तथा च ' वेदविरुद्धत्वादप्रामाण्यमुतभाषामयत्वात् ' इत्यादिविकल्पानामनवसरः दुःस्थत्वमेव "

इत्युक्तं खण्डनकृता।तदसत्, पाञ्चरात्रस्य वेदविरुद्धांशघटितत्वनिरूपणेन वा तदीयांशविशेषस्य वेदविरुद्धत्वेन हेतुनाऽप्रामाण्यनिरूपणेन वा, तस्य शास्त्रस्य परस्परविरुद्धार्थप्रतिपादकत्वेन कारणेनाप्रामाण्यनिरूपणेन वा द्राविडभाषामयप्रबन्धस्य वेदविरुद्धत्वेनाप्रामाण्यस्योपपादितत्वासम्भवात् । नह्यन्यस्याप्रामाण्यकथनेनान्यस्याप्रामाण्यमुपपादितं भवति । अथोच्येत, वेदविरुद्धस्य पाञ्चरात्रशास्त्रस्य वेदविरुद्धत्वेनाप्रामाण्यनिरूपणाद्वेदविरुद्धस्य द्राविडभाषामयप्रबन्धस्यापि वेदविरुद्धत्वेनाप्रामाण्यमुपपादितं भविष्यतीति । तन्न, यथा पाञ्चरात्रशास्त्रांशस्य वेदविरुद्धत्वं श्रीशङ्कराचार्यैर्भाष्ये निरूपितम् तथा द्राविडभाषामयप्रबन्धस्य वेदविरुद्धतायास्तैर्वा खण्डनकृतावाऽद्याप्यनिरूपणेन तदसिद्धौ तेन कारणेनाप्रामाण्यस्योपपादितत्वासम्भवात्।तत एव च विकल्पानामवसरस्य तदवस्थत्वाच्च।

यत्तु–"अभ्युपगम्यापि ब्रूमः। भवतु तावद् द्राविडभाषामयप्रबन्धस्य वेदाविरुद्धत्वम् । न तावता तस्य वेदतुल्यं प्रामाण्यं साधयितुं शक्यम् । तस्याबाधिता सन्दिग्धानधिगतविषयकज्ञानजनकत्वाभावात् । स्वोत्प्रेक्षामूलकत्वेन कल्पितानां तदर्थानामज्ञातत्वस्याबाधितत्वस्य चासम्भवात् । सम्भवेऽपि

वा "न म्लेच्छितवै" "नापभाषितवै" "म्लेच्छोह वा एष यदपशब्दः" इत्यादिभिर्निषेधैर्यदुच्चारणस्य पापजनकत्वमुक्तं तस्य वेदतुल्यं प्रामाण्यं समर्थयतो मध नूनं स्वस्यावैदिकत्वमाविष्करोति"—इति—

खण्डनकृतोक्तम्। तत्र ब्रूमः—"विद ज्ञाने" इति धातोर्निष्पन्नस्य वेदशब्दस्य ज्ञानकरणार्थस्य "प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते। एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता" इत्याद्यनुसारेण प्रमाणान्तराप्राप्तार्थबोधकत्वावच्छिन्ने शक्तिरङ्गीक्रियते तान्त्रिकैः। अपौरुषेयत्वनित्यत्व स्वतः प्रमाणत्वादिकं तस्य वैलक्षण्यम्। तस्य प्रामाण्यञ्च प्रमितिजनकत्वम्। अप्राप्तार्थविषयकप्रमितिजनकत्वपर्यवसितम्। तथा च वेदतुल्यं प्रामाण्यं नाम वेदस्येवाप्राप्तार्थप्रमितिजनकत्वमेव विवक्ष्येत। वेदाश्च ऋगादिभेदभिन्ना अनन्तशाखाश्च। सर्वेषामेव वेदानाम्मन्त्रब्राह्मणरूपाणां प्रामाण्यमेकरूपमेव। तत्र नानाशाखास्वेकार्थविधायिकाश्श्रुतयो दृश्यन्ते। एकशाखागतश्रुतिप्रमितस्याप्यर्थस्य विधानं शाखान्तरीयश्रुत्या क्रियत इति तु सर्वाभ्युपगतम्। तत्र या गतिस्सैवात्रापि भवति। ततश्च द्राविडवेदानामपि प्रामाण्ये न कोऽपि दोषः।

यत्तु—"अबाधितासन्दिग्धानधिगतविषयकज्ञानजनकत्वाभावाद्वेदतुल्यं प्रामाण्यं न सम्भवति" इति।

तन्न। वेदानामेवाबाधिता सन्दिग्धानधिगतार्थ ज्ञानजनकत्वासम्भवात्। अनधिगतार्थज्ञानजनकत्वं यथाश्रुते वेदानां न सम्भवति, वेदबोध्यानामर्थानां स्मृत्यादिगम्यत्वेन सामान्यतोऽनधिगतत्वासम्भ-

वात । स्मृत्यादीनां वेदमूलकत्वेन स्वानुपजीविमानान्तरानधिगतत्व-विवक्षया तद्दोषपरिहारेऽपि, शाखान्तराधिगतस्यैव शाखान्तरबोध्य-त्वात्तद्दोषतादवस्थ्यम् । स्वविजातीय स्वानुपजीविमानान्तरानधिगत-त्वविवक्षया तद्दोषपरिहारे च द्राविडवेदानामपि तादृशार्थबोकत्वं सम्भवत्येव । असन्दिग्धार्थज्ञानजनकत्वं संस्कृतवेदे न सम्भवति, अध्ययनमात्रवतो जायमानस्य बोधस्य सन्दिग्धत्वात् । अत एव हि विचारशास्त्रस्य प्रवृत्तिः । अन्यथा वेदैरेव मीमांसानिरपेक्षम-सन्दिग्धार्थबोधे मीमांसाया वैयर्थ्यमेव स्यात् । द्राविडवेदानां सन्दिग्धार्थबोधकत्वं च नास्ति, तैरसन्दिग्धस्यैवार्थबोधस्य जायमा-नत्वात् । नच तैर्बोध्यमाना अर्था बाधिताः, तेषामनिरूपणादेव । तथा च संस्कृतवेदानां यादृशं अबाधितत्वादिविशिष्टार्थज्ञानजनकत्वं तादृशमेव द्राविडवेदानामपीति न काऽपि क्षतिः ।

यत्तु – स्वोत्प्रेक्षामूलकत्वेन कल्पितानां तदर्थानामज्ञातत्वस्या-बाधितत्वस्यचासम्भवादिति । तन्न, संस्कृतवेदार्थानामिव द्राविडवेदा-र्थानामपि निर्व्याजभगवत्कृपाकटाक्षमात्रप्रतिभातत्वेन स्वोत्प्रेक्षामूल-कत्वाभावात् । अज्ञातत्वाबाधितत्वयोश्च पूर्वमुपपादितत्वात् ।

यत्त–" नम्लेच्छितवै " "नापभाषितवै " " म्लेच्छो ह वा एष यदपशब्दः" इत्यादिभिर्निषेधैर्यदुच्चारणस्य पापजनकत्व-मुक्तम्, तस्य चेदतुल्यं प्रामाण्यं समर्थयानो भवान् नूनं स्वस्या वैदिकत्वमाविष्करोतीति ।

तन्मन्दम्, " म्लेच्छो ह वा एष यदपशब्दः " इति श्रुत्यैव

"नम्लेच्छितवै" इति श्रुत्यर्थस्य व्यक्तीकृततया, संस्कृतभाषाऽपभ्रंशभूतभाषोच्चारणस्य निषेधविषयत्वेऽपि संस्कृततुल्यायास्तद्वत्स्वतन्त्राया द्राविडभाषाया उच्चारणस्य निषेधविषयत्वाभावात् । यदा हि संस्कृतभाषामूलकानां प्राकृतादिषड्भाषाणामपि नापभ्रंशभाषात्वं तदा का कथा स्वतन्त्रभाषाया द्राविड्या अपभ्रंशत्वस्य । द्राविडभाषावैभवातिशयश्च मात्स्यादिपुराणेषु विशेषतश्च शम्भुरहस्ये विस्तरेण वर्णितस्तत एवावगन्तव्यः ।

विश्वेश्वरशास्त्रिणा प्रथमविरोधोपपादनावसरे—तथाहि 'शास्त्रयोनित्वात्' इत्यत्र रामानुजभाष्यम्—इत्युक्त्वा—"तदिदं कारणं ब्रह्म सिद्ध्यत्येवानुमानतः । अतोऽविचार्या वेदान्ता ननु सिद्धानुवादिनः ॥ नैतत्साध्वनुमानादेर्नैककर्तृकयादि सिद्ध्यति । अतस्तत्कारणं ब्रह्म वेदान्तैकप्रमाणकम् ॥" इति श्लोकद्वयं भाष्यत्वेनोदाहृतम् । विरोधपरिहारकारेणेदं श्लोकद्वयं भाष्ये नास्तीत्युक्तम् । तत्र खण्डनकारः प्राह—

"रामानुजीयं भाष्यम्—इत्यत्रापि भाष्यभावार्थ इत्येवार्थः समभिप्रेतः । तमेव भावार्थं स विरोधवरूथिनीस्थेन श्लोकद्वयेनोल्लिखन् विरोधं प्रतिपादयितुं प्रवृत्ते ।" इति ।

खण्डनकारस्य व्याख्यानसामर्थ्यमिदं नूनं युक्तायुक्तविवेककुशलान् विदुषो विस्मापयिष्यति । इत्थञ्चाभिप्रायवर्णनं कुर्वता महाशयेनानेन 'घटपदम्' इत्यस्य घटपदार्थ इति व्याख्यानं क्रियेतेति मन्यामहे वयम् । एतादृशं व्याख्यातारं प्राप्य नूनमितस्सर्वेऽपि

मूलग्रन्थकर्तारो भविष्यन्ति। " रामानुजीयं भाष्यम् " इति लेखितु रामानुजभाष्यभावार्थप्रतिपादकौ श्लोकौ—इति लेखनेन को वा महान् श्रमो भवितुमर्हति। अहो संक्षिप्तलेखनसामर्थ्यम्।

विश्वेश्वरशास्त्रिणा प्रथमविरोधं दर्शयता शास्त्रयोनित्वाधिकरणभाष्यार्थप्रतिपादकश्लोकद्वयोदाहरणानन्तरं—" इत्थं कारणत्वस्य वेदान्तैकप्रमाणकत्वमुक्त्वा " इति ग्रन्थेन जगत्कारणत्वस्य वेदान्तैकप्रमाणकत्वं शास्त्रयोनित्वाधिकरणप्रतिपाद्यमित्युक्तम्। परिहारकृता च ब्रह्मणश्शास्त्रैकप्रमाणकत्वं शास्त्रयोनित्वाधिकरणप्रतिपाद्यं, न तु जगत्कारणत्वं शास्त्रप्रमाणकं न वेति विचारस्तस्मिन्नधिकरणे कृत इत्युक्तम्। तदुपरि खण्डनकारेण महता ग्रन्थेन शास्त्रयोनित्वाधिकरणे जगत्कारणत्वेन ब्रह्मणो वेदान्तवेद्यत्वं समर्थ्यते, नतु ब्रह्मणो वेदान्तैकवेद्यत्वमात्रमित्युक्तम्।

तत्र ब्रूमः—" अथातो ब्रह्मजिज्ञासा " इत्यादिः " तत्तु समन्वयात् " इत्येतदन्ता चतुरसूत्री शास्त्रारम्भार्थेत्यस्मदीयासिद्धान्तः।
" व्युत्पत्त्यभावः प्रतिपत्तिदोषस्त्वन्यमन्येन लभ्यत्वमथाफलत्वम्।
एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि "। इति प्राचां श्लोकेऽयमर्थः प्रतिपादितः। तत्र शब्द सामान्यस्य कार्ये शक्तिरिति पक्षं निरस्य सिद्धे व्युत्पत्तिसमर्थनं प्रथमसूत्रेण क्रियते। शब्दस्य कार्यरूपेऽर्थ एव, व्युत्पत्तिसम्भवात्सिद्धब्रह्मणि व्युत्पत्त्यभावात् वेदान्तानां ब्रह्मबोधकत्वासम्भवात् ब्रह्मजिज्ञासा न कर्तव्येति पूर्वपक्षे शब्दस्य कार्यरूपेऽर्थ एव व्युत्पत्तिरिति नियमाभावात्सिद्धवस्तु-

न्यपि व्युत्पत्तिसम्भवात् वेदान्तानां सिद्धब्रह्मबोधकत्वं सम्भवतीति — 'अथातो ब्रह्मजिज्ञासा' इत्यनेन अध्याहृतकर्तव्येतिपदसहितेन ब्रह्मजिज्ञासा कर्तव्येत्युच्यते । ब्रह्मशब्देन निरतिशयबृहत्त्वविशिष्टवस्तुबोधनान्निरतिशयबृहत्त्वस्य दुर्निरूपत्वेन तद्विशिष्टब्रह्मणो,बाधितत्वात्, प्रमाणभूतशब्दत्वरूपविशेषधर्मावच्छिन्नस्य निरतिशयबृहत्त्वरूपविशेषधर्मावच्छिन्नतात्पर्यकत्वं न सम्भवतीति ब्रह्मजिज्ञासा न कर्तव्येति शङ्कायां तादृशब्रह्मणोऽबाधितत्वप्रतिपादनेन प्रमाणभूतशब्दत्वरूपविशेषधर्मावच्छिन्नस्य तत्तात्पर्यकत्वसमर्थनाद्ब्रह्मजिज्ञासा कर्तव्येति द्वितीयेन जन्मादिसूत्रेण साध्यते । श्रुतित्वावच्छिन्नस्य प्रमाणान्तरानधिगतार्थ एव तात्पर्याद्ब्रह्मणश्चानुमानगम्यत्वेन तत्र तात्पर्यासम्भवान्न वेदान्तानां ब्रह्मतात्पर्यकत्वसम्भव इति ब्रह्मजिज्ञासा न कर्तव्येति शङ्कायां ब्रह्मणः प्रमाणान्तरागम्यत्वेन शास्त्रैकसमधिगम्यत्वात्तत्र वेदान्तानां तात्पर्यं सम्भवतीति ब्रह्मजिज्ञासा कर्तव्येति तृतीयेन "शास्त्रयोनित्वात्" इति सूत्रेण समर्थ्यते । शास्त्रयोनित्वाधिकरणश्रीभाष्ये च ब्रह्मणश्शास्त्रैकप्रमाणकत्वसमर्थनपरमेव सूत्रं व्याख्यातं दृश्यते भाष्यकृता । तथा च तत्रत्यं भाष्यम्— "जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम् । तदयुक्तम्, तद्धि न वाक्यप्रतिपाद्यम्, अनुमानेन सिद्धेरित्याशङ्क्याह—'शास्त्रयोनित्वात्' शास्त्रं यस्य योनिः कारणं—प्रमाणं—तच्छास्त्रयोनि तस्य भावश्शास्त्रयोनित्वम् । तस्मात् । ब्रह्मज्ञानकारणत्वाच्छास्त्रस्य तद्योनित्वं ब्रह्मणः । अत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषय

तया ब्रह्मणश्शास्त्रैकप्रमाणकत्वादुक्तस्वरूपं ब्रह्म 'यतो वा इमानि भूतानि' इत्यादि वाक्यं बोधयत्येवेत्यर्थः "—इति। यद्यपि ब्रह्म-जगत्कारणभूतम्, ब्रह्मप्रतिपादकं वाक्यं च 'यतो वा' इत्यादिकम्, तथापि ब्रह्मणोऽनुमानगम्यत्वेन वाक्यं तन्न प्रतिपादयितुं शक्नोतीति पूर्वः पक्षः, ब्रह्मणोऽनुमानागम्यत्वेन शास्त्रैकप्रमाणकत्वात्प्रतिपादयितुं शक्नोतीति च सिद्धान्तस्तदधिकरणे विवक्षितः। ननु जगत्कारणत्वं प्रतिपादयितुं न शक्नोतीति पूर्वः पक्षः—जगत्कारणत्वमनुमानागम्यत्वेन शास्त्रैकप्रमाणकत्वाद्वाक्यं तत्प्रतिपादयितुं शक्नोतीति सिद्धान्तो वा केवलं जगत्कारणत्वावलम्बनेन तत्सूत्रे विवक्षित इत्येवास्माकं कथनम्। तत्सूत्रभाष्यटीकायां तदधिकरण-संशयपूर्वपक्षादिप्रतिपादनपरग्रन्थेन चायमर्थस्स्पष्टः। इयं च तत्रत्यटीकाग्रन्थः—" यतो वा इमानीति वाक्यं किं ब्रह्मणि प्रमाणं-उत नेति संशयः। तदर्थं किं ब्रह्म मानान्तरागोचरः—न वेति तदर्थं किं सामान्यतो दृष्टमनुमानं जीवविलक्षणमवगमयति—नेति। यदाऽवगमयति तदा मानान्तरगोचरत्वात् 'यतो वा इमानि' इत्यादि वाक्यं न ब्रह्म प्रतिपादयतीति वेदान्तानां ब्रह्मणि प्रामाण्यासंभावाद्विचारानारम्भः पूर्वपक्षे फलितः। राद्धान्ते तु सामान्यतो दृष्टानुमानस्य जीवविलक्षणे प्रमाणत्वाभावेन ब्रह्मणो मानान्तरागोचरत्वात् 'यतो वा इमानि' इत्यादि वाक्यं ब्रह्मणि प्रमाणमिति सर्ववेदान्तवाक्यानां तत्र प्रामाण्यादिचारस्यारम्भणीयत्वं फलितम् "—इति। अत्र च ब्रह्मणो मानान्तरगोचरत्वतदगोचरत्वविचारपूर्वकं शास्त्रैक-

प्रमाणकत्वं समर्थितं तस्मिन्नधिकरण इति स्पष्टम् । तथा च-विश्वेश्वरशास्त्रिणः-"इत्थं कारणत्वस्य वेदान्तैकप्रमाणकत्वमुक्त्वा" इति लेखनमयुक्तमेवेति तत्पक्षसमर्थनाय प्रयस्यतः खण्डनकारस्य प्रयासो निरर्थक इति सिद्धम्भवति ।

यत्तु "यदि जगत्कारणत्वं ब्रह्मणस्सिद्धमेव, केवलं वेदान्तैकवेद्यत्वमेव साध्यत इत्युच्यते-कथं तर्हि अग्रे भाष्यकारेणानुमानेन कारणत्वेन ब्रह्म प्रसाध्य तत्खण्डनं कृत्वा 'यतो वा इमानि भूतानि जायन्ते' इत्यादि वाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीत्युपसंहारः कुतः सङ्गतः स्यात्, 'यतो वा' इत्यादिवाक्येन हि ब्रह्म कारणत्वेनैव बोध्यते स्वरूपन्तु 'सत्यं ज्ञानम्' इत्यादिवाक्यैः प्रतिपाद्यते ।"—इत्युक्तम् ।

तत्र, वदामः। सत्यं कारणत्वं ब्रह्मणस्सिद्धमेव, नानेन सूत्रेण ब्रह्मणः कारणत्वं साध्यते। शास्त्रवेद्यत्वं न सम्भवति - अनुमानवेद्यत्वात्—इति पूर्वपक्षनिरासेन तदेकवेद्यत्वं समर्थ्यते। 'यतो वा इमानि' इत्यादि वाक्यं ब्रह्म जन्मादिकारणत्वेन प्रतिपादयतीत्यत्र को विप्रतिपद्यते। शास्त्रयोनित्वाधिकरणे जगत्कारणत्वं शास्त्रप्रमाणकं नवेति विचारो न क्रियते—अपितु ब्रह्मणः शास्त्रैकप्रमाणत्वम्—इत्येवास्माकं कथनम्। तत्र भाष्यासाङ्गत्यं कथं भवति। ब्रह्म खलु जगज्जन्मादिकारणत्वलक्षणकमेव। तल्लक्षणकमेव च ब्रह्म 'यतो वे' त्यादिवाक्यं प्रतिपादयति। ब्रह्मणश्शास्त्रैकप्रमाणकत्वमेव च तदधिकरणे विचार्यम्। ब्रह्मणः शास्त्रयोनित्वाद्ब्रह्मजिज्ञासा कर्तव्येति हि प्रथमसूत्रेणान्वितस्यास्य सूत्रस्यार्थः। योनिशब्दस्य कारणमात्रवाचित्वपक्षेऽपि ब्रह्मजिज्ञासाशब्दनिर्दिष्टस्य ब्रह्मज्ञानस्य प्रमितिरूपस्य

धर्मित्वात्तस्मिन् शास्त्रैककारणत्वेन हेतुना कर्तव्यत्वं साध्यत इत्यभ्युपगन्तव्यम्, तथैव सूत्रयोरन्वयबोध उपपद्यते। जगत्कारणत्वस्य शास्त्रयोनित्वप्रतिपादनं चेदधिकरणकार्यं, तदा प्रथमसूत्रान्वितस्यास्यैकविशिष्टार्थबोधकत्वं न सम्भवति। 'सत्यंज्ञानम्' इत्यादि वाक्यमपि सत्यत्वादिधर्मपुरस्कारेणैव ब्रह्म बोधयति न केवलस्वरूपमात्रेण।

यदपि—" कारणत्वं वेदान्तैकगम्यं न भवतीत्युद्भावितेभाष्यविरोधः कथं परिहृतस्स्यात्—इति।

अत्र ब्रूमः। कस्तावदाह कारणत्वं वेदान्तैकगम्यं न भवतीति। ब्रह्मणो जगत्कारणत्वं वेदान्तैकगम्यमेव शास्त्रयोनित्वाधिकरणे तु ब्रह्मणः शास्त्रप्रमाणकत्वं विचार्यते न जगत्कारणत्वस्येत्येतावदेवोच्यते। एवं च कः प्रसङ्गो भाष्यविरोधस्य।

यदपि—" किञ्च 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यधिकरणे 'पयं निरीश्वरसाङ्ख्ये निरस्ते सेश्वरसाङ्ख्यः प्रत्यवतिष्ठते—यद्यपीक्षणादिगुणयोगात् सर्वज्ञमीश्वरं जगत्कारणत्वेन वेदान्ताः प्रतिपादयन्ति तथापि वेदान्तैरेव आनुमानिकतया प्रधानमेव प्रतिपाद्यत इति प्रतीयते—इति पूर्वपक्षमाचरन् श्रीभाष्यकारः स्पष्टं जगत्कारणत्वं वेदान्तैकसमधिगम्यं, नानुमानसमधिगम्यमित्येव शास्त्रयोनित्वाधिकरणस्य सारस्यमभिप्रैति "—इत्युक्तम्।

तदप्यकाण्डे ताण्डवमात्रम्। अस्माभिर्जगत्कारणत्वं वेदान्तवेद्यं न भवतीत्यनुक्तेः, शास्त्रयोनित्वाधिकरणे जगत्कारणत्वस्य शास्त्रैकप्रमाणकत्वतदभावविचारो न क्रियत इत्येतावन्मात्रस्योक्तत्वात्। प्रकृत्यधिकरणभाष्येऽपि नास्मदुक्तार्थविरुद्धं किमपि दृश्यते।

जगदुपादानत्वेन वेदान्तैः प्रतिपाद्यमानं प्रधानमेव न ब्रह्मेति सेश्वर-साङ्ख्यपक्षानुवादमात्रस्य तत्र क्रियमाणत्वात्, ईक्षणादिगुणयोगात्सर्वज्ञस्येश्वरस्य जगत्कारणताया वेदान्तैः प्रतिपत्तावपि तत्कारणत्वं निमित्तत्वमात्ररूपम् उपादानकारणं तु प्रधानमेवेति तदीयपूर्वपक्षस्य तत्र वर्णनं क्रियते। एतावता शास्त्रयोनित्वाधिकरणे जगत्कारणत्वस्य वेदान्तैकसमधिगम्यत्वं प्रतिपाद्यमिति कथमवगम्येत। जगत्कारणत्वेन ब्रह्म वेदान्तवेद्यमित्युक्तिमात्रेण तदधिकरणार्थ निरूपणं कृतं न भवति।

एतेन—एतद्विषयकः खण्डनकृतोऽन्योऽपि सर्वः प्रसङ्गस्समाहितो वेदितव्यः । शास्त्रयोनित्वाधिकरणे ब्रह्मणश्शास्त्रवेद्यत्वं सम्भवति न वेत्ययमेव विचारः कृतः, नतु जगत्कारणत्वस्य शास्त्रैकप्रमाणकत्वतदभावविचार इत्येतावन्मात्रमेव ह्यस्माकं कथनम् । ब्रह्मणो जगत्कारणत्वं वेदान्तैकवेद्यमिति त्वस्मदङ्गीकृतमेव ।

विरोधपरिहार प्रधानप्रतिपाद्यार्थखण्डनात्पूर्वं प्रासङ्गिकतया येऽर्थाः खण्डनकृतोक्ताः, तेषामेतावतास्माभिः समाधानं लिखितम्। इतः परमेव विरोधपरिहारखण्डनस्य प्रधानार्थविषये लेखिनीं चालयिष्यामः।

प्रथमं विरोधं परिहरता "आत्माधिकरणे शास्त्रयोनित्वाधिकरणोक्तार्थविरुद्धं किमपि श्रीभाष्यकृता न भाषितमित्युक्त्वा, आत्माधिकरणभाष्यमुदाहृत्य, आत्माधिकरणेऽपि ब्रह्मणः कारणत्वनिर्वाहौपयिकं स्थूलदशापन्नचिदचिद्विशिष्टत्वरूपविकारवत्त्वमुक्तम्, स्वरूपान्यथाभावधर्मान्यथाभावरूपविकारयोरभाव एव ब्रह्मणि वर्तते, यावनिष्टावहौ, न तु तादृशचिदचिद्विशिष्टत्वरूपविकाराभावोऽपी-

त्युपपादितं परिहारकृता । तमिमं परिहारग्रन्थमुद्धृत्य खण्डनं कुर्वता खण्डनकृता "तत्रोत्तर" इत्यारभ्य यदुक्तम् । तत्र ब्रूमः । ब्रह्मण एवावस्थाभेदेन कारणत्वे कार्यत्वे चाङ्गीकृते कथं तस्य नित्यत्वमिति खण्डनकारः पृच्छति । यथा खलु मृद्द्रव्यस्यैवावस्थाभेदेन कारणत्वकार्यत्वयोरङ्गीकारेऽपि मृद्द्रव्यस्य नित्यत्वं तथेति वयं वदामः । तत्र घटो जायते, घटो नश्यतीति व्यवहारः, न तु मृज्जायते नश्यतीति, मृद्द्रव्यस्यैवावस्थाविशिष्टस्य घटत्वेऽपि घटस्य नश्यतीति व्यवहारविषयत्वेऽपि च यथा मृदो नानित्यत्वप्रसङ्गः । तथैव जगदुत्पद्यते नश्यतीति व्यवहारेऽपि वस्तुतो ब्रह्मण एव स्थूलचिदचिच्छरीरकस्य जगच्छब्दवाच्यत्वेऽपि वा ब्रह्मणो नानित्यत्वप्रसङ्गः । "ब्रह्मणो विभक्तनामरूपस्थूलचिदचिद्विशिष्टत्वे स्वरूपान्यथाभावः कथं नो कः स्यात्" इति खण्डनकारः पृच्छति । सततपरिणामशीलपञ्चभूतमयशरीरविशिष्टत्वेऽपि जीवस्य यथा न स्वरूपान्यथाभावस्तथैव ब्रह्मणोऽपि स्थूलचिदचिद्विशिष्टत्वेऽपि न स्वरूपान्यथाभाव इति । विभक्तनामरूपस्थूलचिदचिद्विशिष्टत्व उच्यमानेऽपि न स्वरूपान्यथाभाव उक्तो भवति—इत्यवगन्तव्यम् ।

यच्च—"यादृशं हि स्वरूपं कारणावस्थायां विद्यते, तादृशमेव चेत्कार्यावस्थायामपि, तर्हि कार्यकारणावस्थयोः को विशेषः ?" इति ।

तत्रोच्यते । यादृशं स्वरूपं मृदः कारणीभूतपिण्डत्वावस्थायां तादृशमेव कार्यभूतघटत्वावस्थायामपीति उभयोरवस्थयोर्मृत्स्वरूपभेदाभावेऽपि कार्यकारणावस्थयोर्यथा नाविशिष्टता तथैव ब्रह्मस्व-

रूपस्य कार्यकारणावस्थयोर्भेदाभावेऽपि तदवस्थयोर्नाविशिष्टता, स्वरूपेऽपि तत्तदवस्थाविशिष्टत्वरूपो विशेषस्तयोरवस्थयोर्भवतीति च स्पष्टम् । इति ।

यदपि–" विशेषाभ्युपगमे चागन्तुकविशेषरूपेण तस्यैव ब्रह्मण. परिणामात्कौटस्थ्यं कथं संरक्षितं स्यात् "

इति । तदपि न । पटकारणीभूतेषु तन्तुषु कार्यावस्थाया तन्त्वन्तरसंयोगादिरूपविशेषाङ्गीकारेऽपि स्वस्वरूपप्रहाणेन स्वरूपान्तरपरिग्रहादर्शनेनागन्तुकविशेषस्य कार्यावस्थायामङ्गीकारमात्रेण स्वरूपप्रच्युत्यभ्युपगमस्यानावश्यकत्वात् । ब्रह्मण स्वरूपस्य कारणावस्थाया सूक्ष्मचिदचिद्विशिष्टस्य कार्यावस्थाया स्थूलचिदचिद्वैशिष्ट्यरूपविशेषसद्भावेऽपि तद्रूपेण साक्षात्परिणामानावश्यकत्वात् । अस्मन्मते कौटस्थ्यस्याद्वैतमत इव निर्विकारत्वरूपत्वाभावेन यस्य कस्यचिद्विशेषस्याङ्गीकारमात्रेण कूटस्थताहानिप्रसङ्गाभावाच्च । यस्य कस्यचित्कुलस्य कूटस्थे पुरुषे युवत्ववृद्धत्वाद्यवस्थापरिवृत्तावपि कूटस्थताभङ्गस्यादर्शनाच्च ।

यत्तु–' यद्युच्येत स्वरूपे न कश्चन विकार उत्पद्यते, केवलस्थूलचिदचिद्वस्तुवैशिष्ट्यमात्रमेव तत्र भवति–अतो न कूटस्थत्वक्षतिरिति । तदपि नोपपद्यते । यद्वि विकारिवैशिष्ट्यं कार्यावस्थस्य ब्रह्मण तत् नित्यम् उतागन्तुकम् ? यदि नित्यम्, कथ तर्हि तस्य कार्यत्वम् ? कथं वा तेन ब्रह्मणोऽपि कार्यत्वव्यवहार ? यद्यागन्तुकम्, तर्ह्यागन्तुकविकारिवैशिष्ट्यस्य ब्रह्मण्युत्पन्नत्वे नानित्यतापत्तिरपरिहार्यैव प्रसज्येत ॥ " इति ॥

दृष्टः" इति। ब्रह्मणः परिणामः कीदृश इति शङ्कायां भाष्यकृत्तदाह "जगच्छरीरतयाऽत्मानं परिणमयती" ति। अत्र जगद्रूपेणात्मानं परिणमयतीत्यनुक्त्वा "जगच्छरीरतयात्मानं परिणमयती" त्युक्त्या विभक्तनामरूपस्थूलदशापन्नचिदचिदात्मकजगच्छरीरतयाऽवस्थानमेव ब्रह्मणः परिणामविशेष इत्युक्तं भवति। तच्च साक्षात्परिणामाश्रयजगदन्तर्यामित्वं परम्परया परिणामाश्रयत्वपर्यवसितं भवति। "तद यमर्थः" इत्यारभ्य भाष्यकारः जगत्सृष्टिप्रतिपादकश्रुत्यर्थसंक्षेपं कुर्वन् "आत्मानं तत्तच्छरीरकं परिणमय्य" इति परिणामस्वरूपं व्यक्तीचकार। "एवं परमात्मचिदचित्सङ्घातरूपजगदाकारपरिणामे परमात्मशरीरभूतचिदंशगताःसर्वएवापुरुषार्थाः, तथाभूताचिदंशगताश्च सर्वे विकाराः, परमात्मनि कार्यत्वं तदवस्थयोस्तयोर्नियन्तृत्वेनात्मत्वम्" इति ग्रन्थे च कार्यावस्थापन्नचिदचिदन्तर्यामितयाऽवस्थाय नियन्तृत्वमेव ब्रह्मणः कार्यत्वमित्युक्त्या ब्रह्मस्वरूपे स्थूलरूपापन्नचिदचिदात्मकजगदन्तर्यामित्वेनावस्थानादधिकं साक्षात्परिणामादिकं नास्तीति स्पष्टमुक्तं भवति। साक्षाद्ब्रह्मस्वरूपस्याचिद्वत्परिणामो नास्ति, स्थूलावस्थापन्नचिदचिदन्तरात्मतयाऽवस्थाय तद्रूपापत्तिरेव ब्रह्मणः परिणाम इत्ययमर्थः श्रीभाष्यकारेण वेदान्तसारे स्पष्टमुक्तः। तथा च तत्रत्यो ग्रन्थः—" अविभक्तनामरूपातिसूक्ष्मचिदचिद्वस्तुशरीरकः कारणावस्थः परमपुरुषस्स्वयमेव 'सोऽकामयत बहु स्यां प्रजायेयेति,' विभक्तनामरूपचिदचिद्वस्तुशरीरको भवेयमिति सङ्कल्प्य—' इदं सर्वमसृजत यदिदं किञ्चे' ति स्वशरीरभूतमतिसूक्ष्मं चिदचिद्वस्तु

स्वस्माद्विभज्य—'तत्सृष्ट्वा तदेवानुप्राविशत्' इति स्वस्माद्विभक्ते चिदचिद्वस्तुनि स्वयमेवात्मतयानुप्रविश्य ' सच्चत्यच्चाभवत् । निरुक्तञ्चानिरुक्तं च । निलयनञ्च निलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् ' इति हि स्वस्य बहुभवनरूपपरिणाम उपदिश्यते" इति । अत्र च ब्रह्मणः परिणामो नामरूपविभागविभक्तस्थूलदशापन्नचिदचिदन्तर्यामित्वेनावस्थितस्य तत्तद्रूपतापत्तिरेवेति स्पष्टं प्रतीयते—' बहुभवनरूपपरिणाम इति शब्देन । इत्थञ्च सद्वारकपरिणामाश्रयस्य ब्रह्मणो नित्यत्वे न किमपि बाधकं नाम ।

यत्तु—" यत परिणामो नाम तत्समसत्ताकोऽन्यथाभावः स यादृशस्तादृशो वा भवतु, सर्वथा हि स्वरूपान्यथाभाव एव पर्यवस्यति "—इति ।

अत्रोच्यते—तत्समसत्ताकोऽन्यथाभावः परिणाम इत्यत्र तच्छब्देन यस्य परिणामो भवति सपरिणामाश्रयपदार्थो विवक्षणीयः । तत्समसत्ताकत्वं च व्यापकत्वव्याप्यत्वोभयसम्बन्धेन तत्सत्ताविशिष्टसत्ताकत्वम् । तच्च कुत्रापि परिणामे न सम्भवति, सर्वत्र परिणामस्य तदाश्रयद्रव्यसत्तान्यूनसत्ताकत्वात् । स्वरूपान्यथाभावविलक्षणश्च ब्रह्मणः परिणामः पूर्वमस्माभिरुपपादितः । तथा च—परिणाम इत्युक्ते स्वरूपान्यथाभाव एव, नान्य इत्ययं नियमोनावश्यक इति सिद्धं भवति ।

यदपि—" किञ्च विकारविशिष्टस्य ब्रह्मणो ऽभिन्नत्वे ब्रह्म न स्वरूपान्यथाभावं भजत इति व्याहतम् । प्रकारे वर्तमानस्य विकारस्याऽनित्यत्वाविनाभाविनोऽभ्युपगमेन तदभिन्नत्वे ब्रह्मणोनित्यत्वं न भवतीति कथनं कथं युक्तिसङ्गतं स्यात् ." इति ।

तदपि मन्दम् । अनित्यविकाराश्रयप्रकारवैशिष्ट्यमात्रेण प्रकारिणोऽनित्यत्वप्रसङ्गाभावात् । यदा हि—अनित्यदण्डवैशिष्ट्येन देवदत्तस्य नानित्यत्वप्रसङ्गः, यदा च अनित्यशरीरवैशिष्ट्येन जीवानां नानित्यत्वप्रसङ्गः, तदा का कथानित्यविकाराश्रयप्रकारवैशिष्ट्येन ब्रह्मणोऽनित्यत्वप्रसङ्गस्य । प्रथमं विकारिवैशिष्ट्यस्य ब्रह्माभिन्नत्वे ब्रह्मणः स्वरूपान्यथाभावाभावकथनस्य व्याहतत्वमुक्त्वाऽनित्यविकाराश्रयप्रकाराभिन्नत्वकथने ब्रह्मणोऽनित्यत्वाभावकथनमयुक्तं भवतीति खण्डनकारः कस्य पक्षमाश्रित्य ब्रवीतीति न ज्ञायते। यथा संयोगेन दण्डवैशिष्ट्यं देवदत्तस्य न देवदत्ताभिन्नम्, अपि तु दण्डसंयोगरूपमेव तथा ब्रह्मणोऽपि विकारिचिदचिद्वैशिष्ट्यमपृथक्सिद्धिलक्षणसंयोगेनेति ब्रह्मनिष्ठं तद्वैशिष्ट्यं विकारि चिदचिदपृथक्सिद्धिरूपमेव सिद्ध्यति। न पुनर्ब्रह्माभिन्नं तद्वैशिष्ट्यम् । प्रकारे वर्तमानेन विकारेणाभेदश्च न ब्रह्मणा—इत्यनित्यविकाराभिन्नत्वे ब्रह्मणोऽनित्यत्वापत्तिरित्यपि न भवति प्रसङ्गः । ब्रह्मणः प्रकारभूतचिदचिदभिन्नत्वमपि नास्माभिरङ्गीक्रियते । "तदभिन्नत्वे ब्रह्मणोऽनित्यत्वं नास्तीति" इत्यत्र तदभिन्नत्वशब्देन विकाराभिन्नत्वं विवक्षितं वा विकारिप्रकाराभिन्नत्वं विवक्षितं वेति तु न विवेक्तुं प्रभूयते। उभयमपि चास्मदनभिमतमिति पूर्वमेव प्रपञ्चितमस्माभिः ।

यच्च—"यदि विकारिवैशिष्ट्यं ब्रह्मणो भिन्नं तर्हि कथं तेन ब्रह्मणो विकारित्वम् ।"—इति ।

तदपि न मनोहरम् । ब्रह्मणि स्थूलावस्थापन्नचिदचिद्विशिष्टरूपस्यैव विकारस्यारम्भणाधिकरण्युपगमेन तस्य ब्रह्मभिन्नत्वेऽपि

ब्रह्मणि वर्तमानत्वात्तेन ब्रह्मणो विकारित्वस्यास्तेः। दण्डविशिष्टे पुरुषे पुरुषाद्भिन्नस्य दण्डवैशिष्ट्यस्य सत्त्वे तस्य दण्डसम्बन्धित्वं यथोपपद्यते, तथैवात्रापि ब्रह्मणि विकारिवैशिष्ट्यरूपविकारवत्त्वमुपपद्यते ।

यत्तु—विकारिवैशिष्ट्यस्य ब्रह्मभिन्नत्वेऽपि तत्सम्बन्धो ब्रह्मण्यस्तीति कंचन पक्षमुत्थाप्य, तत्र स सम्बन्धो जन्यो नित्यो वेति विकल्प्य दूषणम्; तन्न । संयोगेन दण्डवैशिष्ट्यस्य दण्डसंयोगापेक्षयातिरिक्तत्वाभावाद्यथा तस्य सम्बन्धान्तरानपेक्षा, तथैवापृथक्सिद्धिसम्बन्धेन ब्रह्मणि स्थूलचिदचिद्वैशिष्ट्यस्यैव विकारिवैशिष्ट्यरूपतया तस्य च स्थूलचिदचित्प्रतियोगिकापृथक्सिद्धिसम्बन्धरूपत्वेन तस्य सम्बन्धान्तरानपेक्षत्वात् ।

यदपि - विकारिवैशिष्ट्यप्रतियोगिकसम्बन्धस्य 'जन्यत्वे पूर्वावस्थाविनाशेन तद्द्वारा स्वरूपान्यथात्वप्रसङ्गेन पुनरनित्यत्वापत्तिस्तदवस्थे' ति । तदपि न। जीवे बाल्ययुवादिशरीरवैशिष्ट्यस्य जन्यत्वेऽपि यथा न स्वरूपस्यानित्यत्वापत्तिस्तथैवात्राप्यनित्यत्वापत्तेरभावात् । मृत्तिकाया घटत्वावस्थायामिव ब्रह्मणोऽपि कार्यावस्थायां स्वरूपपरिणामश्चेत्स्यात्तदा तस्या अवस्थाया विनाशपूर्वकमवस्थान्तरापत्तौ स्वरूपान्यथाभावेनानित्यत्वस्याऽऽपादनं युज्येत। न चैवमङ्गीक्रियते, किन्तु, स्थूलावस्थापन्नचिदचिद्वैशिष्ट्यरूपावस्था ब्रह्मणो भवतीत्युच्यते, न चात्र स्वरूपस्य परिणामः । ततश्च स्थूलसूक्ष्मावस्थापन्नचिदचिद्वैशिष्ट्यरूपावस्थयोरुत्पत्तिविनाशाङ्गीकारे ऽपि न ब्रह्मणः स्वरूपान्यथाभाव इति नानित्यत्वप्रसङ्गः ।

यदपि—“ चिदचिद्वस्तुनोः प्रकारभूतयोः स्थौल्यं सौक्ष्म्यं च विभक्तत्वञ्चाविभक्तत्वञ्च स्वरूपान्यथाभावरूपमित्यवश्याभ्युपगन्तव्यम् । अभ्युपगतं च भवता—‘ अचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति ’ इत्यादिना, चिदंशस्यापि धर्मान्यथात्वं स्वरूपान्यथात्वे पर्यवस्यतीत्युपरिष्टादुपपादयिष्यते ”—इति ।

तदपि न । स्थौल्यसौक्ष्म्ययोरचिदंशगतयोः कथञ्चित्स्वरूपान्यथाभावपर्यवसितत्वसम्भवेऽपि विभक्तत्वाविभक्तत्वयोस्स्वरूपान्यथाभावपर्यवसानाभावात् । न खलु विभागमात्रं स्थौल्यम्, विभागानन्तरं स्थौल्यसम्पत्त्या तयोरेकत्वासम्भवात् । चिदंशगतं धर्मान्यथात्वं ज्ञानसङ्कोचविकासमात्ररूपं न स्वरूपान्यथात्वे पर्यवसितमिति वयमप्युपरिष्टादेवोपपादयिष्यामः ।

यदपि—“ एवं च सति अन्यथाभावमापद्यमानेन प्रकारेण सह यस्सम्बन्धस्सोऽप्यन्यथाभावं न प्राप्नोतीति न वक्तुं शक्यम्, सम्बन्धी अन्यथाभवति न च सम्बन्धस्तथेत्यस्य व्याहतत्वात् । ”—इति ।

तदपि न । तादृशस्य कस्यचिन्नियमस्यासम्भवात् । बाल्याद्यवस्थास्वन्यथाभावमापद्यमानेऽपि शरीरे तत्सम्बन्धस्यात्मनि वर्तमानस्यान्यथाभावाङ्गीकारस्यानावश्यकत्वात् । किमपि वस्त्रं वसाने पुरुषे तस्य वस्त्रस्यैकदेशच्छेदेन वस्त्रस्यान्यथाभावे जातेऽपि पूर्वसम्बन्धस्यैवानुवर्तमानतया सम्बन्धान्तरानुपपत्तेस्सम्बन्धान्यथाभावाभावात् । कमपि दीर्घं दण्डं हस्ते कलयति पुरुषे तद्दण्डाग्रभागच्छेदेन दण्डस्यान्यथाभावे जातेऽपि दण्डपुरुषसंयोगान्यथाभावा-

भावान् हस्ते धृतस्यैव दण्डस्याग्रभागच्छेदेन तद्दण्डपुरुषसंयोगा-न्यथाभावाननुभवाच्च ।

यत्तु—"तथा च तादृशसम्बन्धवत्त्व च ब्रह्मण्यपूर्वमुत्पद्यत इत्यवश्य स्वीकरणीयम् । स्वीकारे ब्रह्मणोऽपि दुष्परिहर स्वरूपान्यथाभाव "—इति

तत्रोच्यते—अत्र 'तादृशसम्बन्धवत्त्वमि' त्यनेनान्यथाभावमापद्यमानस्सम्बन्धो विवक्षितश्चेत्तादृशसम्बन्धोत्पत्त्या । ब्रह्मणस्स्वरूपान्यथाभाव आपादितो भवति । अयुक्तं चेदमापादनम् पिठरपाकवादिमते घटस्यामानिक्षिप्तस्वरूपापरावृत्तौ, पाकजरूपस्य नवीनस्योत्पत्तौ, तत्सम्बन्धस्यापि नवीनस्योत्पत्तावपि घटस्वरूपान्यथाभावादर्शनात् । आम्रादिफलेषु पूर्वरूपरसगन्धादिनाशेन नवीनाना तेषामुत्पत्तौ तत्सम्बन्धानामप्युत्पत्तावपि फलस्वरूपान्यथाभावस्यादर्शनात् । बाल्ययौवनाद्यवस्थाभेदेनान्यथाभावमापद्यमानस्य शरीरस्यात्मनासहान्यथाभावमापद्यमानस्य सम्बन्धस्योत्पत्तावप्यात्मस्वरूपेऽन्यथाभावस्यानङ्गीकाराच्च । ब्रह्मणि स्थूलदशापन्नचिदचिद्वैशिष्ट्यमुत्पद्यमानमपि न स्वरूपान्यथाभावमापादयतीति चासकृदुक्तमेव पुनरत्रापि वदाम ।

यत्तु—ब्रह्मस्वरूपेऽन्यथाभावो न भवति किन्तु ब्रह्मणि स्वीक्रियमाणस्य सम्बन्धस्य विकारस्य वान्यथाभाव, तथाविधसम्बन्धस्य विकारस्य चाश्रयभूतमपि ब्रह्मणस्स्वरूप तथैव तिष्ठतीत्युक्तौ—प्रकारभूताचिदंशस्यापि स्वरूपान्यथाभावो न भवति धर्मान्यथाभावमात्र—स्वरूप तु तस्यापि तथैव तिष्ठतीत्यङ्गीकारसम्भवात्तस्यापि ब्रह्मवन्नित्यत्व केन वार्यतेत्युक्तम् ।

तत्र ब्रूम —ब्रह्मणि न स्वरूपान्यथाभावो नापि धर्मान्यथा-

भावो भवति, प्रकारभूतचिदंशे स्वरूपान्यथाभावः, चिदंशे च धर्मान्यथा भावः—इत्ययमर्थः पूर्वमेवोक्तः । ब्रह्मणि तु स्थूलसूक्ष्मावस्थापन्नचिदचिद्विशिष्टत्वमात्रं कार्यकारणदशयोर्भिद्यते । स तु न स्वरूपान्यथाभावो न वा धर्मान्यथाभावः । धर्मान्यथाभावो हि धर्मस्य नानारूपतापत्तिः । स्थूलचिदचिद्विशिष्टत्वरूपस्य सूक्ष्मचिदचिद्विशिष्टत्वरूपस्य वा धर्मस्य ब्रह्मण्यङ्गीक्रियमाणस्य नास्त्यन्यथाभावः । कार्यकारणदशयोर्भिन्नयोरेव तयो र्ब्रह्मण्युत्पत्त्या एकस्य धर्मस्यान्यथाभावाभावात् । न खलु मृद्द्रव्यमेकमेव यथा घटाद्यवस्थाः प्राप्नोति तथा स्थूलचिदचिद्विशिष्टत्वं वा सूक्ष्मचिदचिद्विशिष्टत्वं वा ऽन्यथाभावं प्राप्नोतीत्युच्यते, येन तस्य वैशिष्ट्यरूपस्य धर्मस्यान्यथाभावेन ब्रह्मणि धर्मान्यथाभाव आपद्येत । ब्रह्मस्वरूप इव प्रकारभूताचिदंशेऽपि स्वरूपान्यथाभावो नाङ्गीक्रियते इत्युक्तिस्तु प्रत्यक्षविरोधाच्छास्त्रविरोधाच्च न सम्भवति । मृदाद्यचिद्द्रव्याणां घटादिरूपेण स्वरूपपरिणामस्य प्रत्यक्षमनुभूयमानत्वात्, "सततविक्रिये"ति प्रकृतेर्वैक्रियमाणता श्रुतेश्च न खल्वस्माभिरदृष्टाश्रुतचरः कोऽप्यर्थः कल्प्यते अपि तु यथादर्शनं यथाशास्त्रं चाङ्गीक्रियते । तत्र कः प्रसङ्गो नित्यत्वापत्तेः ।

यत्तु—" यथा हि मृद्द्रव्यस्य घटशरावादिनानाधर्मैर्विक्रियमाणस्य सर्वावस्थायां मृत्स्वरूपप्रत्यभिज्ञाने सत्यपि तस्य नित्यत्वं नाभ्युपगम्यते, तद्वत्प्रकारस्यापि अन्यथाऽन्यथा विक्रियमाणस्य नित्यत्वं नाभ्युपगन्तुं शक्यम् । "—इति

तत्र वदामः—सत्यमेवमेतत् । यत्सर्वदा विक्रियमाणं दृष्टं तस्य नित्यत्वं न केनाप्यङ्गीक्रियते । अचिदंशस्सर्वदा विक्रियमाण

इति तस्य स्वरूपनित्यत्वं ब्रह्मवन्नास्ति। चिदंशस्य तु स्वरूपतो नित्यस्यैव धर्मभूते ज्ञाने नित्ये सङ्कोचविकासरूपावस्थावत्त्व मङ्गीक्रियते। अतस्सोऽशस्स्वरूपतो नित्यः।

यत्तु—" वस्तुतो धर्मान्यथात्वेऽपि धर्मिणोऽन्यथात्वं न भवतीति कथनं सर्वं लौकिकं तान्त्रिकसम्प्रदायविरुद्धम् " इति।

तत्र ब्रूमः—धर्मो धर्मी चेति पदार्थद्वयमङ्गीकुर्वतां मते धर्मान्यथात्वेन धर्मिणोऽप्यन्यथात्व मित्ययं प्रसङ्गो न भवितुमर्हति। धर्मश्चापृथक्सिद्धविशेषणभूतः कादाचित्कः स्वनिष्ठश्चेति द्विविधो भवति। घटादीनां धर्मिणामन्यथाभावाभावेऽपि तद्धर्माणां रूपादीनामन्यथाभावो भवन् दृश्यते, दण्डकुण्डलादीनामन्यथाभावे जातेऽपि धर्मिणः पुरुषस्यानन्यथाभावो दृश्यते। शरीरस्य प्रतिक्षणमेव वृद्धिह्रासभाजोऽन्यथाभावे जायमानेऽप्यात्मनस्स्वरूपस्यान्यथाभावो न जायते। अन्यथाभावो नाम यदि पूर्वप्रकारादन्यादृशप्रकारवैशिष्ट्यमात्रं तर्हि सततपरिस्पन्दमानवायुसंयोगादिरूपप्रकाराणां प्रतिक्षणमेवा न्यथाभावात्तद्वैशिष्ट्यमात्रेण सर्वेषामेवान्यथाभावव्यवहार आपद्येत। स्वरूपान्यथाभावो धर्मान्यथाभाव इति योऽयं व्यवहारभेदस्सोऽपि लुप्येत। धर्मान्यथाभावमात्रेण चेद्धर्मिणोऽप्यन्यथाभाव आश्रीयते भगवतइच्छापरिगृहीतदिव्यविग्रहाणामन्यथाभावे जायमानेऽपि भगवत्स्वरूपस्यान्यथाभावो वैदिकैः कैश्चिदपि नाङ्गीक्रियते। थालपूल्यस्य पूकारवाचित्वात्प्रकारभेदे सति यद्यप्यन्यथाभावो–ऽन्यप्रकारविशिष्टवेषेण सद्भाव उपपादयितुं शक्यते। परन्तु पुरुषस्य कस्यचिद्वस्त्रादिपरिवर्तने सति वेषस्त्वन्यो जातश्शरीरं तु तथाविधमेव

तिष्ठतीति व्यवहारदर्शनाद्धर्मवैलक्षण्यमात्रेण धर्मिणोऽन्यथात्वव्यवहारो नाङ्गीकर्तुं शक्यते । तस्मात्सर्वलौकिकतान्त्रिकसम्प्रदायविरुद्धत्वकथनमयुक्तमेव । इति ।

यत्तु—"मीमांसकसांख्ययोगादयः सर्वेऽपि हि स्वरूपान्यथात्वं धर्मान्यथात्वं च भिन्नतया नाभिप्रयन्ति ।" इति ।

तत्र ब्रूमः—नात्र मीमांसकानां सांख्ययोगादीनां वा सिद्धान्तस्य कोऽप्युपयोगः । ते यद्वा तद्वा यथा तथा वाऽभिप्रयन्तु । न खलु तदभिप्रेतं सर्वमविकलं वेदान्तिनः स्वीकुर्वन्ति, सांख्ययोगादिमतानां भगवता बादरायणेनैव निरस्तत्वात् । वेदान्तसिद्धान्तः खलु तेभ्यो विलक्षणः शास्त्रैकसमधिगम्यो भवति । ततश्च मीमांसकादीनामभिप्रायविरोधेऽविरोधे वा नास्ति काऽपि क्षतिर्लाभो वेति तत्प्रदर्शनमप्रानावश्यकमेव । एतेन योगदर्शनभाष्योदाहरणमपि प्रत्युक्तम् । योगभाष्यकर्तुः कोऽभिप्राय इतीदानीमत्र विचार एवानावश्यकः । तस्य धर्मिणो धर्मस्य चाभेद एवाभिप्रेतो भवतु कामम् । नात्र तदभिप्रायनिरूपणमुपयुक्तम्, "एतेन योगः प्रत्युक्तः" इति भगवता बादरायणेनैव खण्डितस्य पातञ्जलसिद्धान्तस्यानुरोधे कारणाभावात् ।

धर्मान्यथात्वं नाम—धर्मस्यान्यथाभावः, स्वरूपान्यथात्वं—स्वरूपस्यान्यथात्वं स्वासाधारणाकारान्यथाभावः । अद्वैतसिद्धान्ते ब्रह्मणो ज्ञानं स्वरूपं नतु धर्म इति खलु प्रतिपादनं भवति । यदि पुनर्वस्तुतो धर्मिणो धर्मो नाम नातिरिक्तः पदार्थः कुत्रापि प्रसिद्धः, तर्हि नाविवेक एवासंकृत् व्याप्यते ।

यत्तु—"यदि च नैयायिकमतमाश्रित्य धर्मधर्मिणोर्भेदाङ्गीकारेण धर्माणामन्यथात्वेऽपि धर्मिणो नान्यथात्वमिति प्रकारेण प्रतिक्षणमन्यथाभवतश्चिदचिद्वैशिष्ट्यस्य सत्त्वाभ्युपगमेऽपि न कूटस्थत्वहानिरित्युच्येत । तथा सति तुल्यन्यायेनाचिदंशस्यापि धर्मान्यथात्वेनैव कूटस्थत्वापत्तिरपरिहार्या प्रसज्येत"—

इत्युक्तम् । तत्र वदाम । सत्यमस्माभिर्नैयायिकवदेव धर्मधर्मिणोर्भेदोऽङ्गीक्रियते । किं धर्मधर्मिणोरभेदपक्षमवलम्ब्य प्रसक्ता एते क्रियन्ते खण्डनकृता ? किंवा भेदपक्षे नैते दोषाः सम्भवन्तीति खण्डनकृदभिप्रैति । तर्हि व्यर्थोऽयं प्रयासोऽङ्गीकृतः खण्डनकृता परपक्षमविचार्यैव दूषणप्रदाने प्रवर्त्तमानेनेति वक्तव्यं भविष्यति । धर्मान्यथात्वमेव स्वरूपान्यथात्वमित्यादयो वादास्तर्हि कं पक्षमाश्रित्य प्रवर्तिताः खण्डनकृता ? धर्मधर्मिणोर्भेदाभावे वस्तुतो धर्मिण एव धर्मत्वे धर्मान्यथात्वधर्म्यन्यथात्वयोर्भेदं को वा मूर्खो ब्रूयात् । यस्य खण्डनायैवायमभ्यासोऽङ्गीकृतः । धर्मधर्मिणोर्भेदोऽस्मदभिमत इति स्थिते पूर्वोक्ताः सर्वेऽपि दोषा एकोक्त्या समाहिता भवन्तीत्यायातमिदानीम् । नूनं वृथा प्रयासस्स्वयमभ्यङ्गीकृतः खण्डनकारेण तथास्मभ्यमपि वृथा प्रयासो दत्तो महाशयेन । यत्तु तुल्यन्यायेनाचिदंशस्यापि धर्मान्यथात्वेनैव कूटस्थत्वापादनम्, तदप्यविचारितरमणीयम् । तुल्यन्याय इति कोऽयं न्यायोऽभिप्रेतः स्यात् ? यदि चिदंशस्येवाचिदंशस्यापि स्वरूपान्यथाभावाभावो धर्मान्यथात्वमात्रं च प्रमाणप्रतिपन्ने स्याताम् नूनं तुल्यन्यायेनाचिदंशस्यापि खण्डनकारमतानुसारेण निर्विकारत्वपर्यवसितकूटस्थत्वमापद्येत । प्रमाणानि त्वचिदंशस्य स्वरूपपरिणामं

प्राहयन्ति । प्रत्यक्षत एव मृदादीनामचिद्विकाराणां स्वरूपपरिणामस्यावगमात् । "बह्वीः प्रजाः जनयन्तीं सरूपाम्" "अचेतना परार्था च नित्या सततविक्रिया"–इत्यादिप्रमाणैरचिदंशभूतजडप्रकृतेस्स्वरूपपरिणामप्रतिपादनाच्च । प्रमाणप्रतिपन्नेऽनुभवसिद्धे चार्थेऽभ्युपगम्यमानेऽचिदंशेऽपि धर्मान्यथात्वमेव भवतु मास्तु स्वरूपान्यथाभावः–इत्याद्यापादनस्य कः प्रसङ्गः । न खल्वस्माभिः प्रमाणानुभवासम्प्रतिपन्नोऽर्थः कोऽपि परिकल्प्यते । येनैवमापाद्येत ।

एतेन—"तत्रापीष्टापत्तौ ब्रह्मव्यतिरिक्तस्य तस्यैव नित्यत्वेन ब्रह्मणि ज्ञातेऽपि तज्ज्ञातत्वासम्भवेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाव्याकोपप्रसङ्गः ।"

इति निरस्तम्, जडायाः प्रकृतेस्स्वरूपपरिणामस्यानुभवशास्त्रसिद्धत्वेन, तत्कार्यताया अपि प्रमाणसम्प्रतिपन्नत्वेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाव्याकोपप्रसङ्गाभावात् ।

"अन्नदमपि विचारमर्हति" इत्यारभ्याथोभागे टिप्पणीरूपेण यदुपन्यस्तम्, तदत्र विचार्यते ।

यदुक्तं—"सूक्ष्मचिदचिद्विशिष्टं ब्रह्म स्थूलचिदचिद्विशिष्टब्रह्मोपादानमिति पक्षे भिन्नयोरेवोपादानोपादेयभावाङ्गीकारेण ब्रह्मणश्चिदचिद्भ्यामभेदाभावात्तयोर्ब्रह्मोपादेयत्वं न स्यादिति ब्रह्मणि ज्ञातेऽपि तयो र्ज्ञातत्वानुपपत्त्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया बाध प्रसङ्गः" इति ।

तत्रोच्यते–"येनाश्रुतं श्रुतं भवति" इत्यत्रैकविज्ञानेन सर्वं विज्ञानं प्रतिज्ञातमित्ययमर्थ एव नोपपद्यते, सर्वपदस्यादर्शनात् ।

येन श्रुतेनाश्रुतं श्रुतं भवतीति कारणब्रह्मविज्ञाने कार्यज्ञानं भवतीति हि तत्राभिप्रेतम्। तच्च नानुपपन्नम्, स्थूलचिदचिद्विशिष्टब्रह्मरूपकार्यस्य सूक्ष्मचिदचिद्विशिष्टब्रह्मरूप कारणज्ञानेन ज्ञाततासम्भवात्। कार्यकारणयोरभेदात्। दृष्टान्तानुसारादुपादान ज्ञानेनोपादेयज्ञानं भवतीत्येतत्प्रतिज्ञायत इति लभ्यते। तथाच सूक्ष्मचिदचिद्विशिष्टब्रह्मरूपोपादानज्ञानात्स्थूलचिदचिद्विशिष्टब्रह्मरूपोपादेयज्ञानं भवतीति किमत्रानुपपन्नम्। नच तस्य वा कथं ज्ञानम्, धर्मिण ऐक्येऽपि कारणतावच्छेदककार्यतावच्छेदकघटकसौक्ष्म्यस्थौल्ययोर्विभेदेन सौक्ष्म्यविशिष्टस्य ज्ञानमात्रेण स्थौल्यविशिष्टस्य ज्ञानासम्भवादिति वाच्यम्, दृष्टान्तेऽपि पिण्डत्व घटत्वयोः कारणतावच्छेदककार्यतावच्छेदकयोर्भेदेन पिण्डत्वविशिष्टस्य ज्ञाततामात्रेण घटत्वविशिष्टस्य ज्ञातत्वासम्भवाशङ्कायासम्भवात्तत्र घटत्वेनाश्रुतमपि द्रव्यं पिण्डत्वेन श्रुतं श्रुतं भवत्येव-द्रव्यैक्यादिति तात्पर्यस्य वक्तव्यतया दार्ष्टान्तिकेऽपि स्थौल्यसौक्ष्म्ययोर्विभेदेऽपि विशिष्टब्रह्मस्वरूपस्याविशेषात् कारण श्रवणेन कार्यश्रवणोपपत्तेः प्रतिज्ञानिर्वाहात्।

ननु "येनाश्रुतमि"त्यादिनैकविज्ञानेन सर्वविज्ञानमेव प्रतिपिपादयिषितम्, "एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादानत्वमिति" भवदीयभाष्ये भाषितं च। "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातं भवती" ति मैत्रायणीयश्रुतौ सर्वशब्दश्रवणेनास्य श्रुतिवाक्यस्य तत्समानार्थकत्वाच्चैकस्य ज्ञानेन सर्वस्य ज्ञाततायामेव तात्पर्यम्। इत्थं च स्थूलचिदचिद्विशिष्टस्य ब्रह्मणः सूक्ष्मचिदचिद्विशिष्ट ब्रह्माभिन्नत्वेन तज्ज्ञाते-

न ज्ञाततासम्भवेऽपि ब्रह्मविशेषणयोश्चिदचितोस्ततो भिन्नयोः ज्ञातित्वासम्भवात् प्रतिज्ञोपपादनं न सम्भवति।—मैवम्। सूक्ष्मचिदचिद्विशिष्टब्रह्मविषयकज्ञाने हि कार्यतावच्छेदकघटकस्यांशस्यैवाविषयता—मृत्पिण्डज्ञाने घटस्येव। चिदचिद्विशिष्टस्य तु विषयत्वमस्त्येव। तथा च ब्रह्मणो विशेष्यतया चिदचितो र्विशेषणतया च ज्ञानविषयत्वाज्ज्ञातता वर्तत एवेत्येकविज्ञानेन सर्वेषां ज्ञातता सङ्गच्छत एव। वस्तुतस्तु—मैत्रायणीयश्रुतौ सर्वशब्दश्रवणेऽपि तदनुसारेणात्र सर्वशब्दाध्याहारेऽपि तस्य सर्वशरीरकपरतया न काप्यनुपपत्तिः। सूक्ष्मचिदचिद्विशिष्टत्वेन ब्रह्मणा श्रुतेनाश्रुतमपि स्थूलचिदचिद्विशिष्टं ब्रह्म श्रुतं भवतीत्येवोदाहृतश्रुतिवाक्येन बोधान्न काप्यनुपपत्तिरस्मन्मते। प्रत्युत विवर्तवाद एवैकविज्ञानेन सर्वविज्ञानपूर्विपादनं दुर्घटम्। तथा हि—सर्वस्य ब्रह्मण्यध्यस्तस्याधिष्ठानभूतब्रह्मविज्ञानेन कथं ज्ञातता? नह्यधिष्ठानस्वरूपं तत्? तथात्वे सत्यत्वमिथ्यात्वयोरविरोधप्रसङ्गात्। मिथ्याभूतस्य वस्तुनो वस्तुसत्स्वरूपं नास्तीत्यधिष्ठानस्वरूपत्वकल्पनमप्यनुचितम्। नहि स्वरूपं नास्तीत्येतावता विरुद्धवस्त्वन्तररूपत्वकल्पनं घटेत। सत्यशब्देनानृताद्व्यावृत्तिरभिधीयत इत्याचक्षाणैरनृतस्य प्रपञ्चस्य स्वरूपमाधिष्ठानभूतं ब्रह्मैवेति वक्तुं न शक्यते। येन श्रुतेनाश्रुतमन्यन्मिथ्यात्वेन श्रुतं भवतीत्यर्थ इति चेत्? अयमर्थः कुतस्समागतः? अस्मादेव वाक्याल्लब्ध इति चेत्? मिथ्यात्वेनेत्यस्य किमध्याहारः? अध्याहारे च तस्यैवाध्याहार इत्यत्र किं नियामकम्? सत्यत्वेनेत्यपि सत्त्वध्याहर्तुं शक्यते? अध्याहारसाध्यपक्षरूपदोषकलङ्किततया परं फलमवशिष्यते। ... श्रुतं?

भवती'त्यस्यैव मिथ्यात्वेन श्रुतं भवतीत्यर्थ इति चेत्, अहो वृश्चिकभयात्पलायितस्य व्याघ्रमुखे पतनम्। अध्याहारदोष परिजिहीर्षता लक्षणादोषस्सम्पादितः। तत्रैव लक्षणेत्यत्र नियामकं च न दृश्यते। ननु दृष्टान्तविशेषप्रदर्शनमेव नियामकमिति चेत्? हन्त वाक्यस्वारस्यग्रहणपाटवम्। दृष्टान्तेन हि सत्यमेव प्रतीयते, मृद्घटदृष्टान्तात्। नहि शुक्तिरूप्ययोरिवानयोरधिष्ठानाध्यस्तभावः। सर्वस्य ब्रह्मण्यध्यस्ततया मिथ्यात्वसङ्गतिरिति चेत्? ब्रह्मणस्सर्वाधिष्ठानत्वेन घटाद्यधिष्ठानत्वेऽपि मृत्पिण्डस्य तदधिष्ठानत्वासम्भवान्मृत्पिण्डग्रहणानौचित्यमपरिहार्यम्। मृदवच्छिन्नचैतन्यस्य तथात्वात्तदौचित्यमिति चेत्? यथाकथञ्चित्सङ्गत्यता स्वसङ्केतेन। नैतावता दृष्टान्तभावमर्हति। दृष्टान्तेन हि सुविदितेन भाव्यम्। नहीदमुपदेशतः प्रागेव सुविदितं श्वेतकेतो:—यद्ब्रह्मण्यध्यस्तं घटादिकं सर्वमिति, तथा सत्युपदेशवैयर्थ्यात्। कारणेषु कार्यस्याध्यस्तत्वं प्रायोऽविदितमित्याशयेनैव दृष्टान्तविशदीकरणाय श्रुतिरेव प्रवर्तते-"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिनेति चेत्? कुतोऽयं महान् क्लेशस्समादृतः—यदुमेह दृष्टान्तमुदाहृत्य तदुपपादनायान्य आरम्भः क्रियते। किं सुविदित दृष्टान्तालाभादयं क्लेशस्सह्यते? रज्ज्वैकया विदितया सर्पादि विदितं स्यादिति हि सरलमुदाहरणम्। 'वाचारम्भण विकार' इत्येतावतैव विवक्षितार्थलाभे नामधेयग्रहणं व्यर्थम्। तस्माद्दृष्टान्तस्वारस्यान्मिथ्यात्वेन ज्ञातं भवतीत्यध्याहारोऽसङ्गत एव।

ब्रह्मणस्सर्वाधिष्ठानत्वज्ञापनफलकं ब्रह्मविज्ञानस्य प्रपञ्च-

मिथ्यात्वज्ञानप्रयोजकत्वं चेदिह विवक्षितं स्यात् येनान्यद्विज्ञातं स्यादित्येव श्रुत्या भाव्यम् । 'अश्रुतं श्रुतममतं मतमविज्ञातं विज्ञातं स्यात्', इति प्रतिज्ञानिर्देशो निष्प्रयोजनकस्स्यात् । श्रवणेन वाऽन्येन वा येन केनापि ब्रह्मविज्ञानेन ब्रह्मव्यतिरिक्त मिथ्यात्वस्यावगमात् ।

इत्थं स्वमते जागरूकमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गमनालोच्य परपक्षे समारोपयितुं प्रयतते खण्डनकारः ।

गुणिष्वप्यसतो दोषानारोपयितुमुद्यतः ।
आत्मनो दोषमुद्भूतं पश्यन्नपि न पश्यति ॥

यच्च—"एवं विशिष्टस्य विशिष्टरूपजगदन्तर्यामित्वमपि न स्यात्, ब्रह्मणो ब्रह्मान्तर्यामिकत्वाऽसम्भवात् । केवलप्रपञ्चस्य विशेष्यमात्रान्तर्यामिकत्वेऽपि विशिष्टान्तर्यामिकत्वाभावात् । ततः "कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात् सत्यत्वनैकात्म्यानात्वं निरूप्यते, इति महासिद्धान्तस्यास्य भाष्यस्यासामञ्जस्यप्रसङ्गः।" इति ।

तदपि भाष्यार्थापरिज्ञानविजृम्भितम् । तथाहि—'कृत्स्नस्य जगतो ब्रह्मकार्यतया' अत्र जगच्छब्दो जगच्छरीरकब्रह्मपर एव ब्रह्मशब्दश्च सूक्ष्मचिदचिद्विशिष्टब्रह्मपरः । इत्थं च विशिष्टस्य ब्रह्मणः कारणत्वाद्विशिष्टस्य तस्यैव कार्यत्वाज्जगतः कथं ब्रह्मकार्यत्वं कथं वा ब्रह्मात्मकत्वमिति शङ्काया नावकाशः । 'तदन्तर्यामिकतया' इत्यत्र तच्छब्दस्तु विशेष्यमात्रपरः । विशिष्टस्य ब्रह्मशब्देनोपस्थापितत्वे विशेष्यस्यापि प्रकृतत्वात् । जगत इत्यध्याहारः । तदर्थश्चिदचिद्रूपप्रपञ्चमात्रम् । तस्य च 'तदन्तर्यामिकत्वादि' इत्यत्रान्वयः । एतेन श्रूयमाणस्य जगच्छब्दस्य ब्रह्मकार्यत्वान्वयानुरोधेन जगच्छरीरकब्रह्मपरत्वस्याभिमतत्वाद्युक्त-

णपूच वृक्षान्तर्यामिकत्वासम्भवादसाङ्गत्यमिति शङ्का निरस्ता. जगत इत्यस्याध्याहृतत्वात् । तथा च विशिष्टे विशिष्टकार्यत्वस्य विशेषणांशे विशेष्यान्तर्यामिकत्वस्य चानेन वाक्येन प्रतिपादनान्न कश्चिद्विरोधः ।

यदप्युक्तम्—"यदि सन्मूलास्सत्प्रतिष्ठा इत्यत्र प्रजाशब्दस्य ब्रह्मपर्यन्तत्वं सच्छब्दस्यापि विशिष्टपरत्वं, 'सदायतना' इति शरीरात्ममात्रप्रतिपादकांशे तु प्रजाशब्दस्य विशेषणमात्रपरत्वं सच्छब्दस्य विशेष्यमात्रपरत्वमुच्यते, तथा सति सकृत्प्रयुक्तस्य प्रजाशब्दस्य वैरूप्यं सच्छब्दानां च वैरूप्यं प्रसज्येत"—इति ।

तत्रोच्यते—नेदं दूषणाय, नहि पूर्वमुत्तरत्र च विशिष्टबोधकसच्छब्दसमवधानेन तन्मध्यगतेन सच्छब्देनापि तद्बोधकेनैव भाव्यमिति नियमः । ननु न वयं नियमं ब्रूमः, परं त्वर्थान्तराश्रयणेन वैरूप्याद्वाक्यस्वारस्यं भज्येतेति चेत् ? "बन्धुरात्मात्मनस्तस्य येनात्मैवात्मनाजितः" इति श्लोके पूर्वमुत्तरत्र चान्तः करणपरात्मशब्दसमभिव्याहारे सत्यपि तन्मध्यगतस्यात्मशब्दस्य भूतसङ्घातपरतया व्याख्यानं श्रीशङ्कराचार्याणामस्वरसं किं न स्यात् ? अर्थानुगुण्याददोष इतिचेत् ? तदत्रापि तुल्यम् । ननु कारणत्वमाधारत्वं लयाऽधिष्ठानत्वं चैकत्रैव प्रतिपिपादयिषितमिति सच्छब्दैरेकार्थकैरिह भाव्यमिति चेत् ? एकार्थकत्वमेषां केन परित्यक्तम् ? "सदायतना" इत्यत्र सच्छब्देन विवक्षितं हि 'सन्मूलास्सत्प्रतिष्ठा' इत्यत्र सच्छब्दतः प्रतीयमानान्नार्थान्तरम् । एतेन—प्रजाशब्दव्याख्याने दोषोद्भावनमपि निरस्तम् । यद्वा—स्थूलचिदचिद्विशिष्टं प्रति सूक्ष्मचिदचिद्विशिष्टस्योपादानत्वमङ्गीकुर्वद्भिर्विशेष्यस्य ब्रह्मणः

कार्यविशेषणीभूत स्थूलचिदचिद्वर्गं प्रति कारणत्वमिष्यते। तादात्म्यापृथक्सिध्यन्यतर सम्बन्धावच्छिन्नकार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्नकारणताया एव चोपादानकारण-तारूपत्वम्। इत्थं चेह प्रजाशब्दस्य चिदचिन्मात्रपरत्वाभ्यु-पगमात्तच्छब्दस्य च केवल ब्रह्म परत्वाभ्युपगमाद्वैरूप्यशङ्काया नावकाशः।' कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया तदात्मकत्वादि, ति श्रीभाष्यग्रन्थेऽपि जगच्छब्दस्य चिदचि त्प्रपञ्चमात्रपरताया ब्रह्मपदस्य केवलब्रह्मपरतायास्त्वोकारा-त्तत्रापि तस्यापू शङ्कायानावकाशः। तदात्मकत्वं नाम जग-तस्तत्प्रकारतैकस्वभावतया पृथगवस्थानाभावात्तदन्तर्गतत्वम्— ऐक्यं च तेन प्रकारेणेह विवक्षितम्। अतो न कश्चिद्विरोधः।

यदुक्तम्—"एवं 'प्राज्ञेनात्मना सम्परिष्वक्तः,' इति वाक्ये प्राज्ञशब्दिते भिन्ने परमात्मनि जीवस्य परिष्वङ्गरूपलयश्रवणमभ्युपकल्पेत, विशेषणस्य ब्रह्मोपादानकत्वाभावेन तत्र लयासम्भवात्। नच परिष्वङ्गो न लयः, किन्त्वन्य एव संसर्गविशेष इति वाच्यम् 'स्वाप्ययात्' इति सूत्रभाष्यव्याख्यानपर्यालोचनायां तयोः समानार्थकत्वस्योपलभ्यमानत्वात्।' इत्यादि।

तत्रोच्यते—"प्राज्ञेनात्मना सम्परिष्वक्तः" इत्यादिवाक्ये प्राज्ञशब्दितेन परमात्मना जीवस्य परिष्वङ्गोऽभिधीयते। परिष्वङ्गश्च लयः। प्राज्ञशब्दश्च जीवरूपेणावस्थित परमात्म-वाची। परिष्वञ्जकः प्राज्ञो देवमनुष्यादि नामरूपाभिमान-रागलोभाद्यौपाधिकबाह्याभ्यन्तराकाराभिमानकालुष्यविरहित-जीवशरीरः परमात्मा, परिष्वज्यश्च देवमनुष्यादि नामरूपा भिमानरागलोभाद्यनुगुणबहिर्मुखज्ञान..प्रसक्तजागरितावस्थ-

जीवविशिष्टः परमात्मा । लयो नाम कार्यता रूपविसदृशावस्था प्रहाणेन कारणान्वभावः । एवं च कारणावस्थे ब्रह्मणि कार्यावस्थस्य तस्य जीवशब्दवाच्यस्य लयोऽत्राभिधीयते । कार्यस्य लयो हि कारण एव भवति । कारणं च ब्रह्मणो न निष्कृष्टस्वरूपम् । तस्य नित्यानिर्विकारस्योपादानत्वायोगात् । अपि तु जीवरूपेणावस्थितः परमात्मा । तथा च तत्र नामरूपाद्यौपाधिकाकाराभिमानविरहितजीवविशिष्टत्वरूपकारणावस्थे ब्रह्मणि तद्विसदृशतादृशाभिमानसहितजीवविशिष्टतारूपकार्यावस्थावतो लय उपपन्नः । सुषुप्तिदशायां च नैतदपेक्षया विलक्षणो जीवस्य लयस्सम्भवति । जीवभावस्यामोक्षात्सर्वैरेव सत्त्वाभ्युपगमेन स्वापदशायामेव तन्निवृत्त्यसम्भवात् । अत एव "सुषुप्त्युत्क्रान्त्योर्भेदेन" इति सूत्रे सुषुप्त्युत्क्रान्त्योर्भेदेन निर्देशाभिलापोऽप्युपपन्नतरः । परिष्वज्य परिष्वक्तक भावादिना भेदनिर्देशो हि तत्राभिमतः ।

यदुक्तम्—"भाविस्थूलावस्थावतःपूर्वभाविसूक्ष्मावस्थायोगित्वमुपादानम् ? अवस्थावत्वं च प्रधानामपि चिदचिदीश्वराणामद्वारकसद्वारकं च वर्तत एवेति न काचिदनुपपत्तिरित्युच्यते । तथाऽपि भाविमहत्त्वाहङ्कारत्वाद्यवस्थावत्परमात्मानं प्रति अव्यक्तत्वलक्षणपूर्वावस्थाश्रयस्याचेतनस्याप्युपादानत्वप्रसङ्गः"—इति ।

तन्न । महत्त्वाहङ्कारत्वाद्यवस्थावत्त्वस्येव अव्यक्तत्वलक्षणावस्थावत्त्वस्यापि परमात्मन्येवाभ्युपगमेन परमात्मवियुक्त जडद्रव्यमात्रस्य कारणत्वाभावेन च महत्त्वावस्थाविशिष्टं परमात्मानं प्रत्यव्यक्तावस्थाविशिष्टस्य परमात्मन एवोपादा-

नत्वात्। न खल्वव्यक्तमिति शुद्धजडद्रव्यमात्रस्य नाम भवति। अपि तु तदवस्थपरमात्मन एव। उपादानत्वं च तादात्म्यापृथक्सिद्ध्यन्यतरसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतावत्त्वरूपम्। विशिष्टस्य विशिष्टं प्रति विशेष्यस्य विशेषणं प्रति चोपादानत्वमित्थं सुनिर्वहम्। विशिष्टनिष्ठकार्यतायास्तादात्म्यसम्बन्धावच्छिन्नत्वात्, विशेषणनिष्ठकार्यताया अपृथक्सिद्धिसम्बन्धावच्छिन्नत्वाच्च। महत्त्वावस्थाविशिष्टं परमात्मानं प्रति च जडद्रव्यस्याव्यक्तस्य कारणत्वं नैवं सुवचम्। जडेऽव्यक्ते तादात्म्येन वाऽपृथक्सिद्धिसम्बन्धेन वा महत्त्वावस्थाविशिष्ट परमात्मनोऽसम्बद्धत्वात्।

एतेन—"किञ्चाव्यक्तत्वमहत्त्वाद्यवस्थाया, अव्यक्तमहदादिनिष्ठत्वेऽपि ब्रह्मनिष्ठत्वाभावेन ब्रह्मणः पूर्वावस्थायोगित्वाभावात्कथमुपादानत्वम्।

इति निरस्तम्, ब्रह्मण एव तत्तदवस्थायोगित्वेन तत्तच्छब्दवाच्यताया नामरूपव्याकरणश्रुत्या बहुभवनसङ्कल्पश्रुत्या च लाभेन महत्त्वाद्यवस्थाविशिष्टं परमात्मानं प्रत्यव्यक्तत्वाद्यवस्थाविशिष्टस्य तस्योपादानत्वसम्भवात्। यदपि अवस्थाश्रयत्वस्य ब्रह्मण्यङ्गीकारे तस्य नित्यत्वोपपादनं न सम्भवतीति। तदपि न, ब्रह्मणस्साक्षात्परिणामाभावस्य तत्तदवस्थतत्तच्छरीरकत्वरूपावस्थायोगित्वस्य स्वरूपतो नित्यत्वस्य च पूर्वमेवोपपादितत्वात्। यदपि—"किंच—उत्पाद्यमुपादेयं भवति। उत्पाद्यं च भवन्मते न द्रव्यम्, तस्य नित्यत्वस्वीकारात्। शब्दस्पर्शादिलक्षणावस्थाया एवोत्पत्त्या तस्या ब्रह्मणा सहाभेदगन्धस्याभावेन तज्ज्ञानेन तस्या ज्ञातत्वोपपादनासम्भवात्" इति।

, तदपि न। उत्पत्तेरवस्थान्तरप्राप्तिरूपतया द्रव्यस्यैव पूर्वावस्थाप्रहाणेनावस्थान्तरप्राप्त्या तस्यैवोत्पाद्यत्वात्। प्रत्युतावस्थाया एवानुत्पाद्यत्वात्, अवस्थाया एवोत्पत्तिरूपत्वेन स्वीकृतत्वात्। उक्तं ह्यारम्भाधिकरणश्रीभाष्ये अवस्थावत एवोत्पत्तिमत्त्वम्—"अस्माकं त्ववस्थानां पृथक्प्रतिपत्ति कार्ययोगानर्हत्वादवस्थावत एवोत्पत्त्यादिकं सर्वमिति निरवद्यम्"—इति। अवस्थैवोत्पत्तिरिति च तदधिकरण टीकायां स्पष्टम्। इत्थं हि तत्र टीका—"अवस्थैव वस्तुन उत्पत्तिः। नत्ववस्थाया उत्पत्तिर्नामास्तीति स्वपक्षवैषम्यद्योतनार्थस्तुशब्दः" इति, "अवस्थैवोत्पत्तिरित्यभ्युपगमादवस्थाया उत्पत्तिमत्त्व चोदनमुत्पत्तेरुत्पत्तिमत्त्व चोदनमेवेति जात्युक्तिरिति" इति च।

'प्रस्तावानप्रार्थसंक्षेपः' इत्यारभ्य श्लोकार्थसंक्षेपं कुर्वता—"ब्रह्मणः कूटस्थत्वमभ्युपगम्यते नवा? आद्ये विकारिवैशिष्ट्यकृत विकारित्वं कथं कूटस्थताया नव्याघातकम्? कूटस्थत्वाविघातकं तु विवर्तकारणत्वमेव भवति। नच विवर्तवादो भवताऽऽश्रीयते। द्वितीये चिदचितोर्विकारित्वेनानित्यत्ववद्ब्रह्मणोऽप्यनित्यत्वं न वारयितुं शक्यम्।"

इत्युक्तम्। तत्रोच्यते—ब्रह्मणः कूटस्थत्व काममभ्युपगम्यतेऽस्माभिः। परंतु कूटस्थत्वं न विकारसामान्याभावरूपम्, "अथवा नेदमेव नित्यलक्षणम्। ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्ययोगि यत्तन्नित्यमिति" इति महाभाष्ये प्रथमाध्यायप्रथमपादे प्रथमाह्निके, "नित्येषु च शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः।" इति द्वितीयाह्निके च निर्विकारपरशब्दान्तरसाहच-

र्येण कूटस्थपदप्रयोगदर्शनेनान्यादृशताऽलाभात्। तच्च किंरूपमिति नात्र निरूपणमावश्यकम्। निर्विकारत्वरूपं न भवतीत्येतावन्मात्रस्यैवात्र वक्तव्यत्वात्। एवं च ब्रह्मणि स्थूलावस्थापन्नचिदचिद्विशिष्टरूपविकारविशेषसद्भावेऽपि न कूटस्थत्वव्याघातः।

"कूटस्थत्वाविघातकं तु विवर्तकारणत्वमेवे" ति खण्डनकारोक्तमत्र विचारयामः। विवर्तो हि विविधं वर्तनम्—विभिन्नाकारेण वर्तनरूपम्, तच्च पूर्वाकारभिन्नाकारेण वर्तनम्, रूपान्तरापत्तिरिति फलितम्। सा च रूपान्तरापत्तिः पूर्वावस्थातोऽवस्थान्तरापत्तिरूपविकार एव पर्यवस्यति। तथा च विवर्तकारणत्वेऽपि विकारवत्त्वस्यावर्जनीयतया विकारसामान्यशून्यत्वरूपं कौटस्थ्यं भग्नं भवति। किंच श्रीशङ्कराचार्यैः प्रकृत्यधिकरणे "आत्मकृतेः परिणामादिति" सूत्रभाष्ये मृदादिघटादिरूपेणेव ब्रह्मणोऽपि विकारात्मना परिणामोऽङ्गीकृतो दृश्यते। तथा च तत्रत्यं भाष्यम्—"पूर्वसिद्धोऽपि हि सन्नात्मा विशेषेण विकारात्मना परिणमयामासात्मानमिति" इति; "इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्म एव विकारात्मना परिणामः।" इति च। यद्यप्यारम्भणाधिकरणे परिणामप्रक्रियाश्रयणं व्यवहारार्थमुपासनार्थं चेत्युक्तम्, कार्यप्रपञ्चाश्रयणमपि तदर्थमेवेत्युक्तम्, तावता ब्रह्मणो जगत्कारणत्वमपि परमार्थतो नास्तीत्यायाति। विवर्तकारणवादस्तु श्रीशङ्कराचार्यग्रन्थाननुगुण इत्येवावगम्यते। अस्तु तावदयं विवर्तकारणवादो येन केन वाऽपि प्रवर्तितः। अनुपपन्नश्चैवेषोऽयं विवर्तकारणवाद इति तु वक्तव्यं भवति। विवर्तस्य कारणमिति

वा विवर्तरूपं कारणमिति वा विवर्तकारणशब्दार्थस्स्यात्। आद्ये विवर्त शब्दस्य भिन्नरूपेण वर्तते–पूर्वाकारभिन्नाकारेण वर्तते इति व्युत्पन्नस्य पूर्वाकारभिन्नाकारवत्समर्पकतया, तादृशस्य ब्रह्मविवर्तभूतस्य जगतः कारणं ब्रह्मेत्युक्तं स्यात्, तदपि न मुख्यतया ब्रह्मणि स्वीक्रियतेऽद्वैतवादिभिः। अज्ञानमेव ह्युपादानं जगतस्तन्मते। यथोक्तं वार्तिककृता—"अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम्। अज्ञानं तदुपाश्रित्य ब्रह्मकारणमुच्यते॥" इति। एवं च "यतो वा इमानि भूतानि जायन्ते" इत्यादि श्रुतिस्मृतिभिः "जन्माद्यस्य यतः" इत्यादिभिश्च ब्रह्मलक्षणतया प्रतिपाद्यमानं जगत्कारणत्वं ब्रह्मणो मुख्यं नास्तीति सिध्यति। विवर्तस्य कारणं–अज्ञानं तद्विषयत्वमात्रं च ब्रह्मणि स्वीकुर्वतां मते विवर्तकारणत्वमसत्कल्पमेव भवति ब्रह्मण इति हि स्पष्टम्। विवर्तकारणीभूताज्ञानविषयत्वमेव ब्रह्मणो विवर्त कारणत्वमित्ययमर्थश्च स्पष्टमेवोक्तो ग्रन्थकारैः। यथा–अद्वैतसिद्धौ उपादानत्वोपपत्तौ–"परिणामित्वरूपोपादानत्वाभावेऽपि विवर्ताधिष्ठानतयोपादानत्वसम्भवात्। विवर्ताधिष्ठानत्वं च विवर्त कारणाज्ञानविषयत्वमेव" इति। "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यादिभिस्सूत्रकारेण जगतो ब्रह्मनिमित्तमुपादान चेति समर्थितम्। अभ्युपगतं चेदं श्रीशङ्कराचार्यैरपि तदधिकरणभाष्ये–"प्रकृतिश्च–उपादानकारणं च ब्रह्माभ्युपगन्तव्यम् निमित्तकारणं च" इति व्याचक्षाणैः। जगत्कारणत्वं चेद्विवर्तकारणत्वस्वरूपमेव तच्च विवर्तकारणाज्ञानविषयत्वमात्रम्। तर्हि साधु 'समर्थितं ब्रह्मणो जगदुपादानत्वम्' वस्तुतो विवर्तस्योपादानमज्ञानं तद्विषयभूतं च ब्रह्मेति संलक्ष्यते।

अज्ञानं चेदुपादानं, ब्रह्मण उपादानत्वं कथं सिध्येत्? किमज्ञानं ब्रह्म चेति नार्थद्वयम्? किंब्रह्मैवा ज्ञानम्? तर्हि वाक्यार्थज्ञानेनाज्ञाननिवृत्तौ ब्रह्मनिवृत्तिरिति स्यात्। ब्रह्म विवर्तत इति व्यवहारश्चास्मिन्पक्षेऽनुपपन्नः, ब्रह्मणोविवर्तकारणमात्रत्वात्। नच ब्रह्मकारणकस्यापि विवर्तस्य मृत्कारणकस्य घटस्य मृद्रूपत्वमिव ब्रह्मरूपत्वमुपपन्नमिति ब्रह्म विवर्तत इति व्यवहार उपपन्न इति वाच्यम्; उपादेयस्योपादानाभिन्नत्वेन मृदुपादेयस्य घटस्य मृदभिन्नत्वसम्भवेऽपि विवर्तस्य ब्रह्मोपादानकत्वाभावेन ब्रह्माभिन्नत्वासम्भवात्। अज्ञानं खलु विवर्तोपादानम्। अज्ञानं विवर्तत इति तु युक्तो व्यवहारस्स्यात्। नचैतादृशो व्यवहारो नास्त्येव। "ब्रह्मविद्यासाहित्येऽपि ब्रह्म परिणमते। किन्तु विवर्तत" इत्यद्वैतसिद्धौ दर्शनात्। अनेन च व्यवहारेण ब्रह्मण एव विवर्तत्वं लभ्यते। विवर्त एव च जगदित्यायाति, विवर्तकारणत्वेन जगत्कारणत्वोपपादनात्। विवर्तकारणं च ब्रह्मेति चोच्यते। तथा च विवर्तरुपस्य ब्रह्मणो ब्रह्मैव कारणमित्युक्तौ ब्रह्मण एव कार्यत्वकारणत्वयोर्लाभात्, परिणामिन एव कार्यकारणरूपत्वदर्शनात्, ब्रह्मणः परिणामो जगदिति स्वरूपपरिणामवादप्रसङ्गः। तेन सविकारत्वप्रसङ्गश्च। इत्यादयो बहवो दोषाः प्रसज्यन्ते। द्वितीये विवर्त च तत्कारणं चेति पक्षे कारणभूतस्य ब्रह्मण एव विवर्तत्वाश्रयणात्पूर्वोक्तास्त एव दोषाः। कूटस्थत्वभङ्गश्च, पूर्वोक्तरीत्या ब्रह्मणो विकारित्वप्रसङ्गात्। विवर्तस्याज्ञानोपादानकत्वं चाद्वैतसिद्धिकारादिभिरुच्यमानमसङ्गतं स्यात्, कारणभूतस्य ब्रह्मण एव विवर्तत्वेन तस्याज्ञानोपादानकत्वाभावात्। भावे वा तस्यानित्यत्वापत्तेः।

सर्वकारणत्वभङ्गश्च। इत्यादयो बहवो दोषा अस्मिन्नपि पक्षे प्रसज्यन्ते। तदेवमनुपपन्नतैकवेषो विवर्तकारणवादस्स्वीकृतोऽपि न कूटस्थताव्याघातक इति स्थितम्।

यदपि--"चिदचितोर्विकारित्वेनानित्यत्ववद्ब्रह्मणोऽप्यनित्यत्वं न निवारयितुं शक्यम्"--इति।

तदपि न। विकारसामान्यस्यानित्यत्वापादकत्वमिति नियमाभावात्। अत एव हि धर्मान्यथात्ववतो जीवस्वरूपस्य नित्यत्वम्। स्वरूपान्यथात्वरूपविकारवत एव चानित्यत्वं दृष्टमिति ब्रह्मणस्स्वरूपान्यथात्वरूपविकाराभावेन नानित्यत्वापत्तिः। ब्रह्मणो हि स्थूलावस्थापन्नचिदचिद्वैशिष्ट्यरूपविकारवत्त्वमेवाङ्गीकृतमस्माभिः, न स्वरूपान्यथाभावः।

यत्तु--"वैशिष्ट्यरूपविकारस्यापि ब्रह्मधर्मत्वेन तस्य कारणावस्थायां कार्यावस्थायां च विलक्षणत्वेन धर्मान्यथात्वरूपविकारित्वस्यापीष्टत्वात्।"--इति।

तन्न। स्थूलचिदचिद्वैशिष्ट्यरूपस्य ब्रह्मनिष्ठस्य विकारस्य धर्मभूतस्यान्यथात्वाभावात्। यथा खलु जीवस्य धर्मभूतं ज्ञानं सङ्कोचविकासरूपान्यथाभावं भजते न तथा ब्रह्मनिष्ठो वैशिष्ट्यरूपो धर्मोऽन्यथाभावं भजते। अपि तु स्थूलचिदचिद्वैशिष्ट्यं सूक्ष्मचिदचिद्वैशिष्ट्यं चेति धर्मद्वयमिदं भिन्नकालयोरुत्पद्यते। यद्येक एव धर्मोऽवस्थाद्वयेऽप्यनुवर्तमानोऽन्यथाभावभाग् भवेत् तदा धर्मान्यथात्वं स्यात्। न चैवम्,

अतश्च ब्रह्मणो न धर्मान्यथाभावः। अपि त्वनेकधर्मवत्त्वमात्रम्।

यत्तु—"धर्मान्यथात्वं च स्वरूपान्यथात्वमन्तरा न सम्भवती–"त्यादि।

तत्र पूर्वमेव सर्वमपि वक्तव्यमुक्तमिति पुनः नात्र प्रपञ्च्यते। तथा च धर्मान्यथात्वस्वरूपान्यथात्वयोर्विभिन्नत्वात् ब्रह्मणि धर्मान्यथात्वस्य वा स्वरूपान्यथात्वस्य वाऽभावान्नानित्यत्व प्रसङ्गगन्धोऽपि। धर्मान्यथात्वेऽपि जीववदेव नित्यत्वं सूपपादमिति च स्पष्टमेतत्।

यच्च—"अन्यथात्वं त्रयाणामविशिष्टमिति कथनेन साम्यमेवाऽऽपद्यते।"

—इत्युक्तम्।

तत्-अधर्द्धं पठित्वा कुचोद्यं करोतीति न्यायानुसरणम्। "विकाराणामेषां भिन्नरूपत्वेऽपि विकारत्वमविशिष्टम्।" इत्येव विरोधपरिहारे वाक्यमुपलभ्यते। नत्वन्यथात्वं त्रयाणामविशिष्टम्। इति।

वस्तुतश्च विशेष्यभूते ब्रह्मणि यः स्थूलचिदचिद्वैशिष्ट्यरूपो विकारः, विशेषणीभूतेऽचिदंशे यस्स्वरूपान्यथाभावरूपो विकारः, चिदंशे च यो धर्मान्यथात्वरूपो विकारः, तेषु त्रिष्वपि विकारत्वं वर्तत एवेति न तत्र किमप्यनुपपन्नं। तेषां विकारत्वेन साम्यं काममास्तां नाम, तावता ब्रह्मनिष्ठस्य स्वरूपं धर्मान्यथाभावानात्मकस्य स्थूलचिदचिद्वैशिष्ट्यरूपस्य विकारस्य नानित्यत्वापादकत्वम्। यदा खलु धर्मान्यथात्वस्यैव नास्त्यनित्यत्वापादकत्वम्, तदा का कथाऽस्य विकारस्या-

नित्यत्वापादकतायाः । "विकाराणामेषां भिन्नरूपत्वेऽपि विकारत्वमविशिष्टम् ।" इति, विरोधपरिहारवाक्यमेव चेत् "अन्यथात्वं त्रयाणामविशिष्टम्" इत्यनेनार्थतोऽनूद्यते खण्डनकृता, तदा तु धर्मधर्मिभावविस्मरणेन तथा लिखितमिति वक्तव्यं भविष्यति, यतो विकार एवान्यथात्वम्। विकाराणामवैशिष्ट्यमन्यथात्वत्वेन स्यात्—नतु अन्यथात्वेन।

यत्तु—यदि च मया स्वसङ्केतबलेन त्रयाणामपि विकाराणां विकारित्वलक्षणसाम्येऽपि शास्त्रीयपरिभाषानुसारेण स्वरूपान्यथात्वज्ञानसङ्कोचविकासरूपविकारित्वमेवानिष्टावहम्—अन्यविधन्तु नास्माभिरनिष्टापादकमङ्गीक्रियत इत्युच्यते। तथा सति मृद्द्रव्यस्य घटरूपेण यथा परिणामस्तथा तन्तोर्न भवति, तस्य तु पटरूपेणैव परिणामो भवतीति घटरूपेण परिणाम एवानित्यत्वापादकः न पटरूपेण परिणामोऽनित्यत्वापादक इति तन्तुर्नित्य एव, मृद्द्रव्यमेवानित्यमिति यदि कश्चिद् ब्रूयात्तदा तत्कथनमसङ्गतं न स्यात्, तथापरः कश्चिद् घटादेः शब्दादिरूपधर्मान्यथात्वमेव विकारित्वापादकं, पटस्याग्निसंयोगादिना ऽवस्थान्तरापत्तिर्न विकारित्वापादिकेति यदि ब्रूयात्तत्कथनमसङ्गतं न स्यात्। अतः स्वसङ्केतानुसारेण स्वरूपान्यथात्व धर्मान्यथात्वमेवानित्यत्वापादकं न विकारिवैशिष्ट्यमनित्यत्वापादकमिति कथनमसङ्गतमेव" इति।

तत्रोच्यते—अचिद्गतः स्वरूपान्यथाभावः चितो धर्मान्यथाभावः ईश्वरगतं स्थूलचिदचिद्वैशिष्ट्यं च विकारशब्देन व्यवह्रियते, अतएव त्रयाणामेषां विकारत्वमविशिष्टमित्युक्त

विरोधपरिहारे। एतेषु यस्यानिष्टावहत्वं युक्तिप्रमाणसिद्धं तस्य तथात्वमङ्गीक्रियते, यस्य तु न, तस्य नेत्युच्यते। मृदादीनां स्वरूपान्यथाभावो जीवानां धर्मान्यथाभावश्चानिष्टावहो दृष्ट इति तयोस्तथात्वं स्वीकुर्मः। स्थूलावस्थापन्नचिदचिद्विशिष्टं तच्छरीरकत्वपर्यवसितं कर्मसम्बन्धगन्धरहितस्य परमेश्वरस्य प्रमाणसम्प्रतिपन्नं नानिष्टाय भवतीति च प्रमाणानुसारादङ्गीक्रियते। तत्र प्रतिबन्देः कः प्रसङ्गः। यथैव हि घटरूपेण मृदः परिणामस्तथैव तन्तूनां पटात्मनापरिणामस्तत्रिलक्षणोऽप्यनिष्टावहो दृष्ट इति तन्तूनां नित्यत्वस्य कथं प्रसङ्गः। यत्तु—पटादेरशब्दादिरूपधर्मान्यथात्वकथनम्, तद्धर्मान्यथाभावशब्दार्थानालोचनमूलकम्। यतो धर्मान्यथात्वं नाम धर्मस्यानुवर्तमानस्यैव सङ्कोचविकासादिरूपोऽवस्थाविशेषः। न तु कस्यचिद्धर्मस्य नाशेन धर्मान्तरोत्पत्तावपि धर्मान्यथात्वव्यवहारः। एवं च शब्दादीनां धर्माणां नाशोत्पत्त्योस्तयोर्धर्मान्यथात्वव्यवहारो न भवति। धर्मस्यान्यथाभावो हि धर्मान्यथाभावः। धर्मनाशोत्पत्त्योस्तु धर्मिण एवान्यथाभावो भवति न धर्मस्य। तत्र धर्मस्यैव नष्टत्वेनान्यथाभावाश्रयस्यैवाभावात्। यदि तु पुनर्धर्मनाशोत्पत्त्योरपि धर्मान्यथाभावव्यवहारः प्रामाणिकस्तर्हि तत्र किमपि वैलक्षण्यमवश्यमभ्युपगन्तव्यम्। धर्मस्वरूपेऽनुवर्तमान एव यत्तत्रान्यथाभावो भवति यश्च धर्मनाशोत्पत्तिभ्यां धर्मिण्यन्यथाभावः, तयोर्वैलक्षण्यं ह्यनुभवसिद्धम्। घटादीनां तु कदाचिद्रूपादिधर्ममात्रनाशेन धर्मान्तरोत्पत्तिः,

कदाचिच्च धर्मिण एव नाशो भवति, अतश्च तत्र न केवलं धर्मान्यथाभावोऽपि तु धर्मिणोऽप्यन्यथाभावः । उभयोरनयोरन्यथाभावयोर्यथायोग्यमनित्यत्वापादकता च भवति । यथैव च घटस्य दण्डाघातादिना नाशस्तथैव पटस्याग्निसंयोगादिना नाशो भवतीति तयोरविशेषेण विकारित्वापादकत्वमेव । स्वरूपान्यथात्वधर्मान्यथात्वयोर्मध्ये स्वरूपान्यथात्वमनित्यत्वापादकं धर्ममात्रस्यान्यथात्वं तु न तदाश्रयस्यानित्यतापादकम्—इति दृष्टम् । यदा खलु धर्मान्यथात्वस्यानित्यत्वापादकत्वं नास्ति तदाऽन्यथाभावसामान्यस्यानित्यत्वापादकत्वनियमोऽसम्भवी । एवं च ब्रह्मनिष्ठस्य धर्मान्यथात्वस्वरूपान्यथात्वविलक्षणस्य स्थूलचिदचिद्वैशिष्ट्यरूपविकारस्यानित्यत्वापादकत्वं कथमुच्येत ।

यत्तु—"पूर्वावस्थामपहायावस्थान्तरप्राप्तिरेव विकार इति विकारविदो वर्णयन्ति, नूतनस्य धर्मस्य सम्बन्धस्य वोत्पत्तौ स्वीक्रियमाणायामेतद्विकारलक्षणमविशिष्टमिति विकारित्वप्रयुक्तानित्यत्वापत्तिस्तदवस्थैव"—इति ।

तत्र पूर्वावस्थामपहायावस्थान्तरप्राप्तिर्विकार इति कामं भवतु । नूतनस्य धर्मस्य सम्बन्धस्य वोत्पत्ताविति सामान्यतो यस्य कस्यापि धर्मस्य सम्बन्धस्य चोत्पद्यमानस्य विकारित्वापादकत्वं तु न सम्भवति, उदासीनवायुसंयोगादिरूपधर्मानादायापि विकारित्वव्यवहारप्रसङ्गात् । विकारित्वप्रयुक्तमनित्यत्वमिति सामान्यतो विकारित्वमात्रस्यानित्यत्वप्रयोजकत्वमपि

न सम्भवति, अपितु विकारविशेषविशिष्टत्वस्य; अत एव धर्मान्यथाभावरूपविकारस्यानित्यत्वप्रयोजकत्वाभावः । जीवानां धर्मान्यथाभाववतामपि नित्यत्वं ह्यंगीक्रियते । दीपस्य प्रभासङ्कोचविकासयोस्सत्वेन धर्मान्यथाभावसद्भावेऽपि तत्प्रयुक्तानित्यत्वाभावो ह्यङ्गीकर्तव्यः । यद्यपि दीपोऽनित्यः, तस्य नाशानुभवात्, परंतु प्रभासङ्कोचविकासदशायां दीपस्य नष्टत्वव्यवहाराभावेन न तत्प्रयुक्तं दीपस्यानित्यत्वम् । अपि तु कारणान्तरप्रयुक्तम् । एवं च ब्रह्मणि पूर्वोपदर्शि[illegible] सद्भावेऽपि न तावन्मात्रेणानित्यत्वापत्तिः ।

सत्कार्यवादिनः। ततश्च सद्भूततन्तुसंयोगोत्पन्नस्यापूर्वस्य पटस्य निरन्वयविनाश एव तदभिमतः। छिन्नादितन्तुनाशे सत्यपि यदि कश्चित्तादृशपटसद्भावं प्रत्येति व्यवहरति वा, तर्हि स भ्रान्त इत्येव वक्तव्यं भवति। अस्मन्मते वाऽन्येषां वेदान्तिनां मते वा तत्रान्यथाभावोऽङ्गीक्रियत एव, सद्भूततन्तुरूपावयवसमुदायात्मकस्य तस्य पटस्यावयवनाशे सत्यन्यथाभावस्याङ्गीकर्तव्यत्वात्, न चैवं ब्रह्मस्वरूपमवयवसमुदायरूपम्, न वा तत्र विशेषणीभूतानामचिदादीनामन्यथाभावेऽप्यवयवैकदेशनाशो भवति। येन ब्रह्मस्वरूपनाशेनानित्यत्वापत्तिःस्यात्। अत एव हि कर्मानुसारेण संसरतो जीवस्य सततपरिणामशीलविशेषणीभूतशरीरान्यथाभावेऽपि न नाशो भवति। नचानित्यत्वम्। यस्य वस्तुनस्स्वरूपनाशहेतुभूतोऽन्यथाभावो भवति स एव नष्ट इति व्यवह्रियते। सततपरिस्पन्दमानवायुसंयोगादिरूपधर्माणां प्रतिक्षणमेवोत्पत्तिविनाशयोस्सत्त्वेऽपि तत्प्रयुक्तवैलक्षण्यमात्रं नानित्यताप्रयोजकं भवतीति सर्वैरभ्युपगन्तव्यम्। तत एव चात्र ब्रह्मणि विशेषणीभूतचिदचिदन्यथाभावप्रयुक्तवैलक्षण्यस्य सर्वदोत्पत्तावपि नतावताऽनित्यत्वापत्तिः। इति।

एतेन—"तथा च सति साम्येन नियाम्यानियामकभावादिकं किमपि नोपपद्येतेति सर्वैव मीमांसोन्मूलितास्यात्।"

इति समाहितम्। पूर्वोक्तरीत्या ब्रह्मणश्चिदचितोश्च नानाविधवैलक्षण्यसद्भावात्साम्यप्रसक्तेरेवाभावात् येनकेनापि-

न सम्भवति, अपितु विकारविशेषविशिष्टत्वस्य, अत एव धर्मान्यथाभावरूपविकारस्यानित्यत्वप्रयोजकत्वाभावः । जीवानां धर्मान्यथाभाववतामपि नित्यत्वं ह्यंगीक्रियते । दीपस्य प्रभासङ्कोचविकासयोस्सत्वेन धर्मान्यथाभावसद्भावेऽपि तत्प्रयुक्तानित्यत्वाभावो ह्यङ्गीकर्तव्यः । यद्यपि दीपोऽनित्यः, तस्य नाशानुभवात्, परंतु प्रभासङ्कोचविकासदशायां दीपस्य नष्टत्वव्यवहाराभावेन न तत्प्रयुक्तं दीपस्यानित्यत्वम् । अपि तु कारणान्तरप्रयुक्तम् । एवं च ब्रह्मणि पूर्वोपदर्शितविकारविशेषसद्भावेऽपि न तावन्मात्रेणानित्यत्वापत्तिः ।

यत्तु—"यथा हि सहस्रतन्तुकस्य पटस्य द्वित्रेषु तन्तुषु अपगतेषु तत्संयोगरूपासमवायिकारणस्य विनाशात्सहस्रतन्तुकस्य पटस्य भासमानस्वरूपेऽन्यथाभावस्य स्पष्टं सर्वजनानुभवविषयत्वाभावे विनाशो नैयायिकैरभ्युपगतस्तद्वदेव भवन्मतेऽपि किञ्चिद्वैलक्षण्यमात्रेणैवावस्थान्तरापत्तिस्स्वीक्रियत इति विनाशस्स्वीकृतः स्यात् । इतरथा सर्वस्यापि प्रपञ्चस्य ब्रह्मण इव प्रतिक्षणं यत्किञ्चिद्वैलक्षण्यसत्वेऽपि नित्यत्वमेव स्वीकर्तव्यं भवेत् ।" इति ।

तत्र ब्रूमः—सहस्रतन्तुकपटोत्पत्तौ नैयायिकमते क्रमेण सहस्रस्य तन्तूनां संयोगा अपेक्षिताः, एवं सहस्रतन्तुसंयोगजन्यस्य सहस्रतन्तुकपटस्य तदन्तर्गतैकतन्तुनाशेऽपि नाशो भवति, तत्र विवेचकानामेकद्व्यादितन्तुनाशेऽपि तदवयविनाशोऽनुभवविषयो भवत्येव । तदानीं तादृशस्य पटस्य नाशव्यवहारमपि ते कुर्वन्त्येव । नच नैयायिका वेदान्तिन इव

सत्कार्यवादिनः। ततश्च सहस्रतन्तुसंयोगोत्पन्नस्यापूर्वस्य पटस्य निरन्वयविनाश एव तदभिमतः। छिन्नादितन्तुनाशे सत्यपि यदि कश्चित्तादृशपटसद्भावं प्रत्येति व्यवहरति वा, तर्हि स भ्रान्त इत्येव वक्तव्यं भवति। अस्मन्मते वाऽन्येषां वेदान्तिनां मते वा तत्रान्यथाभावोऽङ्गीक्रियत एव, सहस्रतन्तुरूपावयवसमुदायात्मकस्य तस्य पटस्यावयवनाशे सत्यन्यथाभावस्याङ्गीकर्तव्यत्वात्, न चैवं ब्रह्मस्वरूपमवयवसमुदायरूपम्, न वा तत्र विशेषणीभूतानामचिदादीनामन्यथाभावेऽप्यवयवैकदेशनाशो भवति। येन ब्रह्मस्वरूपनाशेनानित्यत्वापत्तिःस्यात्। अत एव हि कर्मानुसारेण संसरतो जीवस्य सततपरिणामशीलविशेषणीभूतशरीरान्यथाभावेऽपि न नाशो भवति। नचानित्यत्वम्। यस्य वस्तुनस्स्वरूपनाशहेतुभूतोऽन्यथाभावो भवति स एव नष्ट इति व्यवह्रियते। सततपरिस्पन्दमानवायुसंयोगादिरूपधर्माणां प्रतिक्षणमेवोत्पत्तिविनाशयोरसत्त्वेऽपि तत्प्रयुक्तवैलक्षण्यमात्रं नानित्यताप्रयोजकं भवतीति सर्वैरभ्युपगन्तव्यम्। तत एव चात्र ब्रह्मणि विशेषणीभूतचिदचिदन्यथाभावप्रयुक्तवैलक्षण्यस्य सर्वदोत्पत्तावपि नतावताऽनित्यत्वापत्तिः। इति।

एतेन–"तथा च सति साम्येन नियाम्यानियामकभावादिकं किमपि नोपपद्येतेति सर्वैव मीमांसोन्मूलितास्यात्।"

इति समाहितम्। पूर्वोक्तरीत्या ब्रह्मणश्चिदचितोश्च नानाविधवैलक्षण्यसद्भावात्साम्यप्रसक्तेरेवाभावात् येनकेनापि-

रूपेण साम्यस्य प्रमेयत्वादिनेवाकिञ्चित्करत्वात्।

यत्तु—"ब्रह्मणः कूटस्थत्वं कामयमानेन सर्वप्रकारोऽपि विकारः परिहर्तव्यः।" इति।

तन्न। अस्मन्मते कूटस्थत्वस्याद्वैतमत इव विकाररहित्यरूपत्वाभावेनानिष्टावहविकाररहित्यमात्रे प्रमाणानां तात्पर्याच्च कूटस्थत्वं कामयमानानामपि सर्वप्रकारविकारपरिहारस्यानावश्यकत्वात्।

विरोधपरिहारे—"चिदचिदंशयोरेव विकारित्वं ब्रह्मणस्तु विकारवैशिष्ट्यमात्रं न विकारित्वमित्युक्तं इति विश्वेश्वरशास्त्रिणा यदुक्तम् तदयुक्तम्। भाष्यकृता स्पष्टमेव स्थूलचिदचिद्वैशिष्ट्यरूपविकारस्य ब्रह्मणि सद्भावप्रतिपादनात्" इत्युक्तम्। तत्राह खण्डनकारः—

"भवदभिमतभाष्याऽक्षरलभ्यानिष्टावहविकाराभावाभिप्रायेणैव शास्त्रिमहाशयेन विकारित्वाभावप्रतिपादनात्। विकारिवैशिष्ट्यरूपविकारित्वं नास्तीत्यप्रतिपादनाच्च।"—इति।

अत्र वदामः—भाष्यकारेण ब्रह्मणि विकारिवैशिष्ट्यरूपविकारस्याभ्युपगतत्वादनिष्टावहचिदचिद्गतविकारतुल्यविकाराभावमात्रप्रतिपादनाच्च सामान्यतो विश्वेश्वरशास्त्रिणा ब्रह्मणो विकारिवैशिष्ट्यमात्रं न विकारित्वमित्युक्तं भाष्यकृतेति यद्प्रणमुक्तं तदसङ्गतमिति विरोधपरिहारे प्रतिपादितम्। यदि पुनः "अत्र चिदचिदंशयोरेव विकारित्वं ब्रह्मणो विकारिवैशिष्ट्यमात्रम्, न विकारित्वमित्युक्तं" इत्यत्रानिष्टावहविकारा-

भावो भाष्यकारेणोक्त इत्येव विश्वेश्वरशास्त्रिणोऽभिप्रेतं स्यात्, तदा—एकत्र ब्रह्मणः कारणत्वमुक्त्वाऽन्यत्र तद्विरुद्धमुक्तं भाष्यकृतेति विरोधोद्भावनं कथं सङ्गतं स्यात्। कारणत्वस्य विकारमात्रनिर्वाह्यत्वेनानिष्टावहविकाराभावोक्तावपि कारणत्वविरोधाभावेन विरुद्धोक्तेरसम्भवात्। नह्यत्वनिष्टावहविकार एव कारणत्वं निर्वाहकोऽन्यादृशस्तु न तथेति सम्भवति। तथा च—"इत्थं कारणत्वस्य वेदान्तैकप्रमाणकत्वमुक्त्वा 'नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः' इत्यस्मिन्नधिकरणे तद्विरुद्धं रामानुजेनोक्तम्।" इत्युक्त्वा भाष्यमुदाहृत्य "अत्रचिदचिदंशयोरेव विकारित्वं, ब्रह्मणो विकारिवैशिष्ट्यमात्रं न विकारित्वमि"त्युक्तम्—इति लिखतो विश्वेश्वरशास्त्रिणो 'न विकारित्वमित्युक्तम्' इत्यस्यानिष्टावहविकाराभावाभिप्रायकत्ववर्णनं कथमिव सङ्गच्छते। यां भाष्यपंक्तिमुदाहृत्य तन्निर्गलितार्थतया शास्त्रिणाऽयमर्थो लिखितो न खलु तत्रा निष्टावहविकारसद्सद्भावप्रस्तावोऽपिवा वर्तते। तस्मात् खण्डनकृत इदमभिप्रायवर्णनमयुक्तमित्येव सिद्धं भवति।

चिदचितोः प्रकारयोः प्रकारिण ईश्वरस्य च कस्सम्बन्ध इति विश्वेश्वरशास्त्रिकृतस्य प्रश्नस्य अपृथक्सिद्धिलक्षणस्संयोग एव प्रकारप्रकारिणोस्सम्बन्ध इत्युत्तरं दत्तं विरोधपरिहारकृता।

अत्र यदाह खण्डनकारः—"भवद्भाष्यकारः 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्' इति सूत्रव्याख्यानावसरे वैशेषिकाभ्युपगतपरमाणुवादप्र-

क्रियां दूषयन्—'परमाणूनां प्रदेशभेदाभावे सति सहस्रपरमाणुसंयोगेऽपि सत्येकस्मात्परमाणोरनतिरिक्तपरिमाणतयाऽणुत्वह्रस्वत्वमहत्त्वदीर्घत्वाद्यसिद्धिः स्यात् । प्रदेशभेदाभ्युपगमे परमाणवोऽपि सांशाः स्वीयैरंशैस्ते च स्वीयैरंशैः' इत्यादिग्रन्थेनानवस्थां प्रतिपादयन् निरवयवानां संयोगं नाभिप्रैति ।" इति ।

तत्रोच्यते । अस्मिन् खण्डनकृदुदाहृते भाष्य ग्रन्थे निरवयवानां संयोगानङ्गीकाराभिप्रायद्योतकं किमपि पदं न दृश्यते । परमाणूनां संयोगद्वारा अवयव्यारम्भकत्वे तेषां निरवयवत्वेन सहस्रपरमाणुसंयोगेऽप्येकपरमाण्वधिकपरिमाणासिद्ध्याऽणुत्वमहत्त्वाद्यसिद्धिः स्यात् । सांशत्वे चानवस्थाप्रसङ्गः । इत्येतावदेव च तत्र प्रतिपाद्यते, निरवयवानां संयोगो न भवतीत्ययमर्थस्तत्र न प्रतिपाद्यते । इत्थं हि तत्र भाष्यम्—"अन्यथा परमाणूनां प्रदेशभेदाभावे सति सहस्रपरमाणुसंयोगेऽप्येकस्मात्परमाणोरनतिरिक्तपरिमाणतयाऽणुत्वह्रस्वत्वमहत्त्वदीर्घत्वाद्यसिद्धिः स्यात्, प्रदेशभेदाभ्युपगमे परमाणवोऽपि सांशाः स्वकीयैरंशैः—ते च स्वकीयैरंशैरित्यनवस्था" इति । एतदधिकरणभाष्यटीकायां विप्रतिपत्तिप्रदर्शनसमये—"परमाणूनां संयोगद्वाराऽवयव्यारम्भकत्वे कारणानवस्थितिकार्यप्रथिमासिद्ध्योरन्यतरप्रसक्तिरवर्जनीया नेति" इति कथयता टीकाकारेण भाष्यार्थः स्पष्टीकृतः । अग्रे च "परमाणूनामि" ति प्रतीकमुपादाय व्याचक्षाणैः—निरवयवत्वे सहस्रपरमाणुसंयोगेऽप्येकपरमाण्वनतिरिक्तपरिमाणतया सर्षपमहीधराद्यधर्मसिद्धेः पर-

माणूनां सांशत्वमास्थेयमित्यर्थः" इत्युक्तं व्यासार्यैः। तेनेदं स्पष्टं तत्र निरवयवानां संयोगाङ्गीकारानङ्गीकारचर्चैव नास्तीति ।

यत्तु—"संयोगस्य चाव्याप्यवृत्तित्वेन निष्प्रदेशस्य संयोगोऽव्याप्यवृत्तिर्न भवितुमर्हतीति तस्य व्याप्यवृत्तित्वाभ्युपगमे चिदचिद्वर्गस्य ब्रह्मणा समं सर्वात्मना संयोगस्यावर्जनीयतया स्वाभिमतं परिच्छिन्नत्वं विहतं स्यात् । अथवा ब्रह्मण एव व्यापकत्वं विनष्टं भर्यादित्यवश्यमभ्युपगन्तव्यमिति व्यापकताभञ्जकस्वाभाव संयोगस्य भवानेव विचारयतु" इति ।

तत्रोच्यते—संयोगस्याव्याप्यवृत्तित्वेऽपि निष्प्रदेशेऽपि संयोगो भवितुमर्हत्येव। तत्राप्यौपाधिकांशसम्भवात्। नैयायिकादिनये निष्प्रदेशेऽप्याकाशे भेर्यवच्छेदेन शब्दोत्पत्तिवदत्रापि तत्तत्पदार्थावच्छेदेनेश्वरे संयोगसम्भवात्। नैयायिकादिनये निरवयवस्याप्याकाशस्य घटादिसंयोग एवमेवाव्याप्यवृत्तिरुपपादनीयो भवति। यच्च—संयोगस्य व्याप्यवृत्तित्वाभ्युपगमे चिदचिद्वर्गस्य परिच्छिन्नत्वानुपपत्तिरिति—तन्न । घटाकाशसंयोगस्यैकस्मिन् सम्बन्धिनि घटे घटीययावत्प्रदेशव्यापित्वेऽपि सम्बन्ध्यन्तरभूत आकाशे यथा न यावत्प्रदेशव्यापित्वं तथैव ब्रह्मणोचित्पदार्थस्य च यस्संयोगस्तस्य यावदचित्प्रदेश व्यापित्वेऽपीश्वरीय यावत्प्रदेशव्यापित्वाभावात् । तत एव चिदचितोः परिच्छिन्नत्वे बाधकाभावात्। यदपि ब्रह्मणो व्यापकत्वहानिरिति । तदपि न, ब्रह्मणश्चिदचिद्व्यापकत्वस्य तदीयान्तर्बहिस्सम्बन्धित्वरूपतया सम्बन्धस्य व्याप्यवृत्तित्वाङ्गीकारमात्रेण तस्य हान्यभावात् ।

यदपि—"निरवच्छिन्नसंयोगस्याप्रसिद्धत्वेन तत्सम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्यैवाप्रसिद्धत्वाच्चद्धटितव्यापकत्वनिर्वचन मतिमन्दम्" इति।

तदपि न, विभुद्वयसंयोगाङ्गीकर्तॄणां मते तत्संयोगस्यैव निरवच्छिन्नत्वसम्भवात्। "यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥" इत्यादिप्रमाणैस्सर्वेषां पदार्थानामन्तर्बहिश्च भगवद्व्याप्तत्वलाभेन भगवत्प्रतियोगिकसंयोगस्य तत्तत्पदार्थनिष्ठस्य निरवच्छिन्नतासम्भवात्। एकस्मिन् पदार्थे संयोगतदभावयोस्सत्त्वे विरोधपरिहारायावच्छेदकभेदस्य कल्पनीयतया तादृशसंयोगस्यावच्छिन्नत्वावश्यकत्वेऽपि भगवत्संयोगस्य क्वापि पदार्थे स्वाभावसमानाधिकरणत्वाभावेन विरोधाभावादवच्छेदकाकल्पनेन तस्य निरवच्छिन्नत्वे बाधकाभावात्। नच संयोगस्य द्विनिष्ठत्वेन भगवत्संयोगस्य तत्तत्पदार्थेष्विव भगवत्यपि सत्त्वेन तत्रैव स्वाभावसमानाधिकरणतया निवरोधभञ्जनायावच्छेदकं कल्पनीयमिति तस्यापि न निरवच्छिन्नत्वसम्भव इति वाच्यम्, अन्तर्यामिस्वरूपस्य प्रतिवस्तु पूर्णवृत्तितया घटादिवस्त्वसंयुक्तप्रदेशविशेषस्यैवाभावेन ब्रह्मरूपे सम्बन्ध्यन्तरेऽपि तस्य संयोगस्य स्वाभावसमानाधिकरणत्वाभावेनावच्छेदकस्याकल्पनीयतया निरवच्छिन्नत्वसम्भवात्। अव्याप्यवृत्तिप्रतियोगिकसम्बन्धस्याव्याप्यवृत्तित्वावश्यकत्वेऽपि व्याप्य-

वृत्तिप्रतियोगिकसम्बन्धस्यतथात्वाभावेन तस्य निरवच्छिन्नत्वसम्भवात्। खण्डनकृदुक्तरीत्या ब्रह्मणि प्रदेशभेदाभावेन प्रदेशभेदेन संयोगतदभावयोरेकत्र वृत्त्यभावेनावच्छेदकाकल्पनात्तत्तत्पदार्थेष्विव भगवत्यप्यनवच्छिन्नस्यैव वृत्तिसम्भवाच्च। भगवत्संयोगस्य भगवत्प्रतियोगिकसंयोगरूपस्य तेन रूपेण भगवद्भिन्नद्रव्येष्वेव सत्त्वेन निरवच्छिन्नतासम्भवाच्च। संयोगस्य निरवच्छिन्नत्व केनापि प्रकारेण न सम्भवतीत्यङ्गीकारेऽपि वा संयोगस्थाने संयोगसम्बन्धावच्छिन्नाधिकरणताया एव निरवच्छिन्नायाः प्रवेशेन व्यापकतापरिष्कारस्सम्भवति। तथा च सति स्वभिन्नद्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकता संयोगसम्बन्धावच्छिन्ननिरवच्छिन्नाधिकरणतासम्बन्धावच्छिन्ना ग्राह्या। सा चाधिकरणता न ब्रह्मनिष्ठा। अपितु तत्तत्पदार्थमात्रनिष्ठा निरवच्छिन्नैव, प्रदेशभेदेन तस्यास्स्वाभावसामानाधिकरण्याभावेनावच्छेदकाकल्पनात्। यदि ब्रह्मनिरूपिताधिकरणत्वं कुत्रापि नास्ति, तदा अधिकरणतास्थाने संयोगानुयोगितैव निवेशनीया। स्वभिन्नद्रव्यत्वसमानाधिकरणभेदप्रतियोगितानिरूपित संयोग सम्बन्धावच्छिन्नावच्छेदकताशून्यत्वमात्रस्य व्यापकतारूपत्वे ब्रह्मणस्तत्तद्द्रव्येषु यत्किञ्चित्प्रदेशमात्रसम्बन्धेऽप्येतादृशव्यापकतानिर्वाहेणाभिलषितसर्वदेशव्याप्तिलाभासम्भवान्निरवच्छिन्नसंयोगस्य वाऽधिकरणताया वा प्रवेशः।

यदपि—"निरवच्छिन्नसंयोगस्वीकारे त्रयाणामेव समानपरिमाणत्वमेव

प्रसज्येतेति यत्रभगवतोऽणुत्ववादेन तथेश्वरस्यापरिच्छिन्नत्ववादेन च ”—इति ।

तदपि न । चिदचितोः कार्त्स्न्येन भगवद्व्याप्ततया भगवत्स्वरूपासंयुक्तप्रदेशविशेषाभावेन तत्संयोगस्य निरवच्छिन्नत्वेऽपि भगवत्समानपरिमाणत्वप्रसङ्गाभावात् । बहूनां घटपटादीनां भगवत्संयुक्ततया तेषु कस्यापि पदार्थस्य भगवद्व्याप्यवद्देशव्यापित्वाभावेन तत्समानपरिमाणत्वासम्भवात् ।

यच्च—“भवद्भाष्यकारैर्निरवयवसावयवयोरिव संश्लेषलक्षणसंयोगं जतुकाष्ठवदनभ्युपगच्छद्भिः ” इत्यादि ।

तत्पूर्वमेव निरस्तम्, अस्मद्भाष्यकारैः कुत्रापि तदनुक्तेः। अचिद्ब्रह्मणोस्तथाविधयोस्संयोगस्याङ्गीकृतत्वाच्च ।

यत्तु—“किंच ‘अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः’ इत्यादि नैयायिकोक्तप्रकारेण परिच्छिन्नानामपरिच्छिन्नेन ब्रह्मणा सदाप्राप्तेरनभ्युपगमेन तदीयसम्बन्धस्य संयोगविशेषरूपत्वं कथं वर्णयितुं शक्यम् ”—इत्युक्तम् ।

तत्रोच्यते—‘ अप्राप्तयोस्तु ’ इत्यादेः असम्बद्धयोर्यस्सम्बन्धस्संयोग इत्यर्थाङ्गीकारेऽसम्बन्धपूर्वकस्सम्बन्धस्संयोग इत्युक्तं स्यात्। सम्बन्धाभावोत्तरकालिकस्सम्बन्ध इति फलितम्। तथा चासम्बन्धदशायां विभागस्य सत्त्वाद्विभागोत्तरकालिकस्सम्बन्धस्संयोग इत्युक्तं भवति । इदं चायुक्तम्, विभागस्य संयोगनाशकतया नैयायिकैरभ्युपगतस्य संयोगनाशपूर्वभावित्वाभ्युपगमस्यावश्यकत्वेऽपि संयोगपूर्वकालस-

त्वानियमस्यानावश्यकत्वात्। ययोर्द्वयोस्संयोगस्तयोः पूर्वं विभागेन भाव्यमिति तु नियमोऽसम्भवी, संयुक्तयोरेव कयोश्चित्सम्बन्धिनोरुत्पत्तिदर्शनात्। आम्रफले बीजं मांसस्थानीयं वस्तु त्वक्चेत्येतानि परस्परसंयुक्तान्युत्पद्यन्ते, तत्र बीजमांसयोः कमपि कालं विभक्तस्थित्यनन्तरं संयोगो जात इति को वा प्रतिज्ञातुं शक्नोति। सहैव खलु तयोरुत्पत्तिःप्रामाणिकी। तत्र बीजमांसयोस्संयोगस्य विभागपूर्वकत्वं न दृश्यते। अतश्चेदं सरूपकथनमात्रम्। किञ्च 'अप्राप्तयोरि'त्यादिकं किं संयोगलक्षणपरम्, उत स्वरूपकथनपरम्। संयुक्तव्यवहारहेतुत्वस्य वा संयोगत्वजातिमत्त्वस्य वा तल्लक्षणत्वेन नैयायिकैर्बहुभिस्स्वीकृतत्वाल्लाघवेन तस्यैव स्वीकरणीयत्वाच्च न प्रथमः। द्वितीये तु न सर्वेषां 'संयोगानामिदं सम्भवतीति सम्भवाभिप्रायकं स्यात्। किञ्च—नैयायिकनये योऽपिकोऽपि वा भवतु संयोगः। अस्माकं तु मते संयुक्तप्रत्ययहेतुत्वमेव संयोगलक्षणम्। संयोगश्च कार्यरूपोऽकार्यरूपश्चेति द्विविध। विभुद्वयसंयोगोऽकार्यसंयोगमध्येऽन्तर्भवति। ततश्च विभागपूर्वक एव संयोगो भवतीति नायं नियमोऽस्मन्मते। एवं च सर्वदा भगवद्विशेषणभूताभ्यां चिदचिद्भ्यां ब्रह्मणो विभागाभावेपि न संयोगसद्भावे बाधकं किमपि दृश्यते—इति। एतेन "कथंचि"दित्यादिकमस्मन्मतानाकलनमूलकं सर्वमपि निरस्तं वेदितव्यम्। सर्वावस्थास्वपृथक्सिद्धयोरपि संयोगाङ्गीकारे पूर्वोक्तरीत्या बाधकानुपलम्भात्।

यत्तु—"अतद्विचदाचिदीश्वराणां संयोगकथनं युक्तिविरुद्धं शास्त्रविरुद्धं स्वसमयविरुद्धं च"—इति।

तत्र युक्तिविरोधः परिहृतः। स्वसमयविरोधश्च भ्रान्त्युद्भावितः परिहृतः। शास्त्रविरोधश्च न प्रदर्शित इति कः परिह्रियताम्।

यत्तु—"भवदीयभाष्यग्रन्थे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तये ब्रह्मजगतोरभेदस्यापेक्षिततया तस्य च स्वयमनङ्गीकारात्स्वरूपैक्यप्रयुक्तैक्याभावेऽपि देशबुद्धिजात्यादितः सर्वे गावः सायं गोष्ठ एकीभवन्ति, सर्वे राजान एकीभूताः, एको व्रीहिरित्यादिस्थलेष्वैक्यव्यवहारोपपादनवत् प्रकृते जगद्ब्रह्मणोः स्वरूपतो भिन्नयोः केनचिदाकारेणाभेदो वक्तव्यः। स क इति विचारे अपृथक्सिद्धविशेषणत्वमिति सहसूक्त्योऽप्यस्त्वापृथक्सिद्धैक्यमेव भगवद्भाष्यकृत्सम्मतम्।"—इति।

तत्रोच्यते—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तये सत्यं जगद्ब्रह्मणोरैक्यमपेक्षितम्। स्थूलावस्थचिदचिद्विशिष्टब्रह्मण एव जगच्छब्दवाच्यत्वात्सूक्ष्मावस्थापन्नचिदचिद्विशिष्टस्य ब्रह्मण एव कारणत्वाच्च कार्यकारणयोरभेद इति कारणब्रह्मविज्ञानेन कार्यभूतब्रह्मविज्ञानं साधु सम्पद्यत इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः। "तदैक्षत बहु स्यां प्रजायेयेति" इति बहुभवनसङ्कल्पपूर्वकं तेज आदिपदार्थसृष्टेः "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति जीवशरीरकपरमात्मानुप्रवेशपूर्वकनामरूपव्याकरणस्य, "तदनुप्रविश्य सच्च त्यच्चाभवदि"त्यनुप्रवेशपूर्वकसत्त्यद्भावस्य च श्रूयमाणतया,

सर्वावस्थावस्थितयोश्चिदचितोः परमात्मशरीरतया शरीरवाचिनां शब्दानां शरीरिपर्यन्तवाचितया च, सर्वेषां शब्दानामचिज्जीवविशिष्टपरमात्मवाचित्वाच्च, सूक्ष्मावस्थापन्नचिदचिच्छरीरकसच्छब्दवाच्याद्वितीयकारणब्रह्मणः स्थूलावस्थापन्न चिदचिच्छरीरकसत्यशब्दवाच्यकार्यब्रह्मणाऽभेद एवेति कारणात्कार्यस्यानन्यत्वात्कारणब्रह्मविज्ञानेन कार्यब्रह्मविज्ञानं भवतीत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिर्जगद्वाचिशब्दैस्सह ब्रह्मवाचकशब्दानां सामानाधिकरण्योपपत्तिश्चेति भगवान् भाष्यकारोऽभिप्रैति । स्थूलावस्थापन्नचिदचिच्छरीरकं ब्रह्मैव जगदिति च भगवता भाष्यकृता स्पष्टमेवाभिहितं वर्तते । तथा चारम्भणाधिकरणभाष्यम्—"अचिद्वस्तुनि स जीवे ब्रह्मण्यात्मतया ऽवस्थिते नामरूपव्याकरणवचनाच्चिदचिद्वस्तुशरीरकं ब्रह्मैव जगच्छब्दवाच्यमिति"—इति । एवं च जगद्ब्रह्मणोस्स्वरूपतो भिन्नयोरपृथक्सिद्धैक्यमेव भाष्यकाराभिमतमित्युक्तिरयुक्तैवेति सिद्ध्यति । ब्रह्मण एव जगत्त्वेन जगद्ब्रह्मणोर्भेदाभावात् । विशेषणीभूतयोश्चिदचितोर्जगच्छब्दार्थान्तर्गतयोस्तु ब्रह्मणोपृथक्सिद्धविशेषणत्वमेव—न स्वरूपैक्यम् ।

यत्तु—"सिद्धिर्नाम स्थितिः प्रतिपत्तिश्च, 'पृथक्स्थितिप्रतिपत्त्ययोग्यः' इति त्वदीयग्रन्थेषु बहुशो व्यवहारदर्शनात्, स्थितिप्रतिपत्त्योरैक्यमवयवावयवि जाति व्यक्ति गुण गुणिस्थलेषु पृथक्स्थितिप्रतिपत्त्योरभावादवसीयते"—इति ।

तत्रोच्यते—अपृथक्सिद्धानां पदार्थानां यदपृथक्सिद्धास्ते

ततः पृथक्प्रतिपत्तियोग्यत्वं नास्ति। तत्र पृथक्प्रतिपत्त्यनर्हत्व-
स्यप्रतीत्यैक्ये पर्यवसानेऽपि पृथक्स्थित्ययोग्यत्वं स्थित्यैक्यरूपं
न भवति। घटतद्गतरूपयोरपृथक्सिद्धयोरपि स्थित्यैक्यानुपल-
म्भात्। न खलु घटस्थितिरेव रूपस्थितिरिति सम्भवति। स्थि-
तेस्तत्तद्रूपत्वेन तयोर्भिन्नत्वात्। घटस्य स्थितिर्भूतलादौ, रूप-
स्य तु घटे, अपृथक्स्थितिर्नाम घटाश्रितस्यैव रूपस्य सर्वदा
स्थितिः। घटानाश्रितं रूपं कदापि न तिष्ठतीत्यर्थः। तथा च
घटापृथक्स्थितिः घटानुयोगिकसम्बन्धविशिष्टतारूपा रूपस्य।
वैशिष्ट्यं स्वप्रतियोगित्व स्वाधिकरणकालवृत्तित्व सम्बन्धा-
वच्छिन्नस्वनिष्ठप्रतियोगिताकात्यन्ताभावत्वोभयसम्बन्धेन ।
घटानुयोगिकसम्बन्धानधिकरणकाले रूपं न वर्तत इति भावः।
ततश्च घटतदीयरूपयोरपृथक्स्थिति र्न स्थित्यैक्यरूपेति सि-
द्धम्। पृथक्प्रतिपत्त्ययोग्यत्वं तु–ततः पृथक्प्रतिपत्त्ययोग्यत्वस्य
स्वीयलौकिकविषयताव्यापकतद्विषयताकत्वरूपत्वेन यत्र यत्र
ज्ञाने स्वविषयता तत्र तत्र तद्विषयताऽपीत्येतदर्थपर्यवसानात्क-
ततस्सप्रतीतिरन्यप्रतीतिश्चैकैवेत्यस्यार्थस्य प्राप्त्या प्रतीत्यैक्ये-
कथंचित्पर्यवस्यतीति बोध्यम्। तस्मात् पृथक्स्थितिप्रतिपत्त्य-
नर्हत्वं स्थित्यैक्यप्रतीत्यैक्यरूपमित्युक्तिरयुक्ता।

यत्तु—"ननु संयोगविशेषलक्षणमपृथक्सिद्धत्वं भाष्याद्यनुमतमि"ति।

तत्रोच्यते–चिदचितोर्ब्रह्मापृथक्सिद्धविशेषणत्वं भाष्याद्य-
नुमतमिति त्वविवादम्। तच्च शरीरत्वपर्यवसितमित्यपि स्प-
ष्टम्। शरीरशरीरिणोः केनचित्सम्बन्धेन विशेषणविशेष्य-

भावः स्वीकर्तव्यः। वैशिष्ट्यस्य सम्बन्धनियतत्वात्। स चायं सम्बन्धोऽपृथक्सिद्धिसम्बन्ध इत्युच्यते। स च नातिरिक्तः पदार्थः। अपि तु संयोगविशेष एव। नैयायिकादिभिस्समवायस्यैवातिरिक्तस्यानभ्युपगमात्। अनेनाभिप्रायेण पृथक्सिद्धिलक्षणसंयोगविशेष इत्युक्तं विरोधपरिहारे। अस्मत्संप्रदायग्रन्थेषु च प्राचीनैराचार्यैरस्य सम्बन्धस्योल्लेखः कृतो वर्तते। तत् केन कारणेन खण्डनकारस्स्वमतापरिज्ञानं परिहारकृतः स्थापयतीति न जानीमो वयम्। यदि न संयोगविशेषः अपृथक्सिद्धविशेषणयोर्ब्रह्मणा सह सम्बन्धो भाष्यानुमतः क इति खण्डनकार एव प्रदर्शयतु। अपृथक्सिद्धिलक्षणस्संयोगविशेष इति परिहारे कथितम्। पृथक्स्थितिप्रतिपत्त्यनर्हा अपृथक्सिद्धा भवन्ति। तावता यदपृथक्सिद्धा ये पदार्थास्ते तदभिन्ना इति न वक्तुं शक्यते। यावत्सत्त्वमसम्बन्धानर्हाणामपृथक्सिद्धस्सम्बन्ध इति सम्प्रदायविदः। संयोगविशेष एव स इतिच।

यत्तु—"ननु। इत्यारभ्य, नैयायिकोक्तमयुतसिद्धत्वमेवापृथक्सिद्धत्वमस्त्वित्याशङ्क्य "तथा सति नियताश्रयाश्रयिभावलक्षणायुतसिद्धत्वस्य भेदैकसाधकत्वेन प्रकारैक्यासाधकत्वादि" त्युक्तम्। तत्र भ्रमः। तर्हि किमस्मन्मते प्रकारप्रकारिणोरैक्यमभिमतमिति खण्डनकारो मन्यते? यद्येवं तर्हि नूनं प्रमादत्रयमिति वक्तव्यं भविष्यति। नास्माकं मते प्रकारप्रकारिणोरैक्यमभिमतम्, अपि तु भेद एव, प्रकारद्वयविशि-

ष्टस्य प्रकारिण ऐक्यमस्माभिरुच्यते । विशिष्टान्तर्गतत्वात्प्रकार्योस्समुदायस्यैकत्वव्यवहारो भवति । विशेषणविशेष्यभावापन्नचिदचिदीश्वरसमुदायरूपं जगत् । तादृशमेव च तत्कारणभूतं सच्छब्दवाच्यं वस्तु । तयोर्विशिष्टयोः कार्यकारणरूपयोरेकत्वादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानिर्वाह इति बोध्यम् ।

यत्तु—"पृथक्प्रतिपत्तिकार्याणामेव पृथगुत्पत्त्यादिकमपेक्षितम्, इत्यादिश्रुतप्रकाशिकाग्रन्थपर्यालोचनायां यस्योत्पत्तिविनाशाव क्षयसत्तादिकमाश्रयोत्पत्त्यादिनैव व्यवह्रियते तत्तदपृथक्सिद्धमिति फलति । ततश्च यदुत्पत्त्योत्पद्यत इति व्यवह्रियते यत्सत्तया सदिति व्यवह्रियते न तु सत्तान्तरमपेक्षते तत्तदपृथक्सिद्धमिति । ततश्च विकृतेः प्रकृतिव्यतिरिक्तसत्ताशून्यत्वादभिन्नसत्ताककारणत्वमुपादानत्वं ब्रह्मण इति ब्रह्मव्यतिरिक्तचेतनाचेतनवर्गं प्रति ब्रह्मणोऽपृथक्सिद्धकारणत्व लक्षणाभिन्नसत्ताककारणत्वरूपोपादानत्वप्रकृतित्वापरपर्यायात्मकस्य सत्त्वादात्मभूते तस्मिन् ज्ञाते इतरत्सर्वं ज्ञातमेव इतरस्य पृथक्प्रतिपत्तियोग्यस्य ज्ञातव्यस्याभावात्तत्सत्तया सदिति व्यवहारवत् तज्ज्ञाततया ज्ञातमिति व्यवहर्तुं शक्यत्वात्—इत्येव मदीया प्रक्रिया । तां विस्मृत्यालौकिकयोग विशेषं ब्रुवाणः कथं नोपहास्यो भवेदिति सुधिय एव विचारयन्तु ।"—इति ।

तदिदमयद्धं पठित्वा कुचोद्यं करोतीत्यामाणकं स्मारयति, सर्वस्याप्यस्य स्वकपोलकल्पितत्वात् । अस्मदीयग्रन्थेषु कुत्राप्येवंविधस्य निरूपणस्यानुपलम्भात् । आरम्भणाधिकरणश्रीभाष्ये सत्कार्यवादनिरूपणावसरे—'द्रव्यस्योत्तरोत्तरसंस्थानयोगः, इत्यादिनोत्पत्तिविनाशस्वरूपं निरूपयद्भिर्भाष्यकारैरत्र-

स्था नाम पूर्वाणामुत्पत्तावसत्कार्यवादप्रसङ्ग इति चोद्ये प्रतिबन्दीं प्रदर्श्य समादधद्भिः—" अस्माकं त्ववस्थानां पृथक्प्रतिपत्तिकार्यानर्हत्वादवस्थावत एवोत्पत्त्यादिकं सर्वमित्युक्तम् । इदं व्याकुर्वता टीकाकारेण—" पृथक्प्रतिपत्तिकार्यानर्हधर्माः पृथगुत्पत्तिनिरपेक्षाः अतएव ह्युत्पत्तेरुत्पत्त्यादिनैरपेक्ष्यम् । तस्मादपृथक्सिद्धधर्मास्तु स्वयं धर्मिण उत्पत्त्याद्यवस्थाभूता इत्यर्थः । " इत्यत्रापृथक्सिद्धधर्माणां पृथक्प्रतिपत्तिकार्यानर्हाणां स्वयमेवोत्पत्तिरूपत्वात्पृथगुत्पत्त्यादिनैरपेक्ष्यमुत्पत्तेरुत्पत्त्यन्तरनैरपेक्ष्यदृष्टान्तेनोपवर्णितम् । अत्र च पृथक्प्रतिपत्तिकार्ययोगानर्हाणां धर्माणां पृथगुत्पत्त्यादिनैरपेक्ष्यमात्रमुक्तम् । न तु तदेवापृथक्सिद्धत्वमिति । अतएव—" अपृथक्सिद्धधर्मतया पृथक्प्रतिपत्तिकार्यानर्हव्यतिरिक्तानामुत्पत्त्यादिकं पृथगपेक्ष्यते " इति तत्पूर्ववाक्ये अपृथक्सिद्धधर्मत्वस्य पृथक्प्रतिपत्तिकार्यानर्हत्वप्रयोजकत्वकथनं टीकाकृतस्सङ्गच्छते । यदुत्पत्त्योत्पद्यत इत्यादिकं च खण्डनकारोक्तमपृथक्सिद्धत्वं जीवादिषु भगवदपृथक्सिद्धेष्वव्याप्तम् । ब्रह्मणो जगत्कारणत्वं चास्माभिरित्थं निरुह्यते । अचिज्जीवविशिष्टेश्वररूपसमुदायस्य जगच्छब्दवाच्यस्य तादृशेश्वररूपसमुदायः कारणम् । तत्र विशिष्टं प्रति विशिष्टस्य कारणत्वं विशेष्यांशस्य विशेष्यांशं प्रति विशेषणांशं प्रति च कारणत्वमस्ति । विशेष्यभूतेश्वरस्वरूपस्योपादानत्वरूपकारणत्वं विशेषणद्वारा स्वरूपे परिणामाभावेन विशेषणीभूताचिदंशद्वारापरिणामात् । सद्वारकमपि परिणामित्वं मुख्यमेव " येनाश्रुतं श्रुतं भवती " त्याद्येकविज्ञानेन

सर्वविज्ञानप्रतिज्ञास्थले कारणवस्तुविज्ञानेन कार्यविज्ञानमभिप्रेतम् । तच्च कार्यकारणयोरुभयोरेवाचिज्जीवविशिष्टब्रह्मरूपत्वेन सूपपादं भवति । इयमेवास्माकं प्रक्रिया । आकरेषु सर्वमिदं स्पष्टम् । तस्मात्स्वयमेवास्मदीयां कामपि प्रक्रियां परिकल्प्य दूषणमनुचितमेव । अपृथक्सिद्धिसम्बन्धस्य संयोगविशेषरूपत्वं पूर्वमेवास्माभिर्निरूपितम् । तत्र च न कामप्यनुपपत्तिं पश्यामः । न च कस्यापि ग्रन्थस्य विरोधः इति ।

यत्तु—"वस्तुतस्त्वेवंरूपमपृथक्सिद्धत्वं विवर्तवाद एव पर्यवस्यति । तथाहि—प्रपञ्चस्य ब्रह्मसत्ताऽव्यतिरिक्तसत्ताभावे शुक्त्यादावारोपितस्य रजतस्य मिथ्यात्वमिव प्रपञ्चस्याप्यसत्यत्वमेव प्रसज्येत" इति ।

तत्र प्रपञ्चशब्दार्थो यद्यस्मत्सिद्धान्तानुसारेणाचिज्जीवविशिष्टं ब्रह्म, तर्हि तस्य ब्रह्मणो ब्रह्मसत्तातिरिक्तसत्ताकत्वं नास्तीति युक्तमेव । यदि विशेषणीभूतचिदचिन्मात्रम्, तर्हि तयोर्ब्रह्मसत्तातिरिक्तसत्ताभावकथनमयुक्तम् । चिदचितोर्ब्रह्मणश्च स्वरूपाणां परस्परं भिन्नतया तत्सत्तानामपि भिन्नत्वात् । सत्तायाः सन्निति प्रतीतिसिद्धायाश्चिदचिदीश्वरेषु पृथक्पृथग्विद्यमानत्वात् । सत्ता यदि वर्तमानत्वं—कालसम्बन्धरूपा, तदापि तत्तन्निष्ठस्य कालसम्बन्धस्य सम्बन्धिभेदेन भिन्नस्यैक्यं कथं भविष्यति ? यदि यत्र कुत्रचिद्वर्तमानत्वमाधेयत्वपर्यवसितम् । तदाऽपि सा भिन्नैव तेषु । "विवर्तवाद एव पर्यवस्यति" इत्युक्त्वा, "प्रपञ्चस्य ब्रह्मसत्तातिरिक्तसत्ताभावे" इति कथयता प्रपञ्चे ब्रह्मसत्तातिरिक्तसत्ताभावो ब्रह्म-

सत्तातिरिक्तसत्तावत्त्व स्वीक्रियत इति ज्ञायते । तत्र यदि प्रपञ्चे ब्रह्मसत्ताऽभिन्ना सत्ता वर्तते तर्हि ब्रह्मण इव प्रपञ्चस्यापि सत्यत्वं कुतो न भवति ? प्रपञ्चसत्ताया ब्रह्मसत्तायाश्चाभिन्नत्वे ब्राह्मणो वा मिथ्यात्वं स्यात् । "अपृथक्सिद्धत्वं विवर्तवादे पर्यवस्यती" ति कथयतो ब्रह्मविशेषणतया प्रपञ्चसद्भाव' किमभिमतः तथात्वे मिथ्यात्वं कथं सेत्स्यति ।

इदमत्र बोध्यम्—अपृथक्सिद्धाना पदार्थाना यदपृथक्सिद्धास्ते तत्सत्तातिरिक्तसत्ता नास्तीति नास्माकं सिद्धान्त । घटापृथक्सिद्धाना रूपादीनां घटसत्तातिरिक्तसत्ता नास्तीति कोऽङ्गीकुर्यात् । जीवापृथक्सिद्धाना शरीराणां जीवसत्तातिरिक्तसत्ताया अभावो वा कथं वक्तु शक्य । अपितु केषाचिदपृथक्सिद्धाना यदपृथक्सिद्धास्ते तत्सत्ताधीनसत्ताकत्वं भवति । यथा जीवसत्ताधीनसत्ताकत्व शरीरस्य, घटसत्ताधीनसत्ताकत्वं घटगतरूपादीनां च ततश्च ब्रह्मापृथक्सिद्ध चिदचिद्वर्गस्य ब्रह्मसत्तातिरिक्तसत्ता नास्तीति पक्षमवलम्ब्यास्मत्सिद्धान्तदूषण भ्रान्तिमूलकमेवेति ।

यत्तु—आश्रयसत्ताया एव तदाश्रितपदार्थेषु सत्ताव्यवहारविषयत्वमिति शङ्का तद्दूषणत्व तद्वचर्थविचाररूपम् अस्माभिस्साक्षादेव चिदचिदीश्वरेषु प्रत्येकं सत्त्वाङ्गीकारेणाश्रयसत्ताविषयकत्वेन व्यवहारनिर्वाहस्यानावश्यकत्वात् ।

एतेन—प्रपञ्चे साक्षात्सत्ताभावपक्षावलम्बनेन प्रवृत्तान्यन्यान्यपि दूषणानि निरस्तानि वेदितव्यानि । अस्माभिस्साक्षादेव प्रपञ्चे

सत्ताङ्गीकारात् । अत्रेदं बोध्यम्, सत्ता नाम कालसम्बन्धित्वं वा मानसंबंधार्हत्वं वा भवनापरपर्यायः कश्चिदतिरिक्तो धर्मो वा स्यात् । आद्ये सम्बन्धस्य सम्बन्धिभेदेन भिन्नतया घटतद्गतधर्मेष्विव चिदचिदीश्वरेष्वपि भिन्नभिन्नैव सा । द्वितीयेऽपि—ब्रह्मणश्चिदचितोश्च प्रत्येकं भिन्न एव सः । मानसम्बन्धस्य प्रमितिविषयतापर्यवसितस्य विषयभेदेन भिन्नतया तेषु प्रत्येकं भिन्नस्यैव तस्यावश्यकत्वात् । घटापृथक्सिद्धस्य घटरूपस्य नियमेन घटविषयकज्ञान एव विषयत्वेपि घटरूपनिष्ठयोर्विषयतयोर्भिन्नतायास्सर्वसम्प्रतिपन्नत्वात् । चिदचितोरीश्वरात्पृथक्सिद्धयोर्नियमेनेश्वरविषयकज्ञान एव विषयत्वे ऽपि तत एव विषयते भिन्ने । तृतीयेऽपि चिदचिदीश्वरेषु प्रत्येकं भिन्नैव सा । ईश्वरो भवति जीवो भवति प्रकृतिर्भवतीति तुल्यतया व्यवहारादेकत्रैव सा नान्यत्रेति वक्तुमशक्यत्वात् । तथाच चिदचिदीश्वरनिष्ठानां सत्तानां भिन्नत्वादीश्वरसत्तयैव चिदचितोरपि सत्ताव्यवहारविषयत्वे तयोर्मिथ्यात्वापत्तिरित्यादयः प्रसङ्गा नोदयमर्हन्ति । एतेन प्रपञ्चस्यासत्यत्वप्रसङ्गोऽपि समाहितः । समाहिताश्च जातिरूपतापक्षे प्रदर्शिताश्च दोषाः ।

यत्तु—सत्ता सती असती वेति विकल्पानवस्थादोषप्रदर्शनं। जगन्मिथ्या न वा मिथ्या चेत्तद्गतं मिथ्यात्वं मिथ्या न वा, मिथ्या चेत्तद्गतमपि तथा न वा इत्याद्यनवस्थादोषं स्वशिरसि पतन्तं विस्मृत्य कृतम् ।

यत्तु—सन् सन्—इति—प्रतीतिरनुगताकारत्वेन सद्रूपमेकं । स्वीकरणीयमिति—सद्धटस्सत्पट इत्यनुगतसदंशविषयकत्वे घटपटादी-

नामपि परस्परमभेदप्रसङ्गेनाद्वैतवादस्साधितो भवतीति तत्रोच्यते—यद्येवं तर्हि घटो नीलः पटो नीलः कुड्यं नीलमिति प्रतीतेरप्यनुगताकारत्वेन नीलमप्येकमङ्गीकरणीयमिति,तादृशनीलबुद्धेस्तादृशानुगतनीलाभेदविषयत्वे नीलघटपटकुड्यादीनामपि प्रत्यक्षविरुद्धो भेदः स्यात् । तत्र यदि घटपटादिनीलानां तद्गतनीलरूपाणां च भिन्नत्वेऽपि यत्किञ्चिदनुगतधर्ममात्रेण तादृशानुगतनीलप्रतीतिरुपपत्तिस्तर्ह्यत्रापि सतस्सत्त्वस्य च भिन्नभिन्नत्वेऽपि यत्किञ्चित्तद्गतानुगतधर्ममात्रेणैव तादृशानुगत प्रतीतिनिर्वाहान्न तेन सत ऐक्यं वा घटपटादीनामभेदो वा सिद्ध्यतीति सन्तुष्य ताम् । सत्त्वस्य च कालसम्बन्धादिरूपत्वं पूर्वमुक्तम् ।

एतेन—सतोऽनुवर्तमानत्वाद्घटादीनां च व्यावर्तमानत्वादनुवर्तमानव्यावर्तमानयोरभेदासम्भवात्कल्पिताभेदस्य स्वीकरणीयतया घटादीनां ब्रह्मणि कल्पितत्वसिद्धिरिति परास्तम् । सत्त्वस्य तत्तत्पदार्थभेदेन भिन्नतया तस्यानुवर्तमानत्वाभावात् । सत्ताया घटादिनिष्ठाया धर्मरूपतया तस्याश्च घटाद्भिन्नत्वेनाभेदस्यैवाभावेन तत्कल्पनाया अनावश्यकत्वेन च घटादीनां कल्पितत्वासिद्धेश्च ।

यत्तु—"तथा च प्रयोगः—घटादयः स्वानुगतप्रतिभासे वस्तुनि कल्पिताः । विभक्तत्वात्, यथा सर्पमालादिकं स्वानुगतप्रतिभासे रज्ज्वादिदमंशे विभज्यते, एवं ब्रह्मण्यनुगच्छति घटादिकं विभज्यते । सन् घटः सन् पट इत्यादि स्वानुगतप्रतिभासत्वं च स्वतादात्म्येन स्वरूपतो भावयोग्यत्वम् । स्वतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारताश्रयत्वमिति यावत् सतस्य व्यापकत्वमर्थः । व्यापकतानिरूपकत्वं च तादा-

त्म्यसम्बन्धेन कल्पितत्वं च ज्ञाननिर्वर्त्यत्वं स्वाभावघति शेयत्वं वा तथा च घटादयः स्वतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारताव्यापकस्वनिवर्तकधीविषयताकाः । उक्तप्रकारताव्यापकत्वात्यन्ताभावका वेति साध्यं पर्यवसितम् । विभक्तत्वं च स्वसमानसत्ताकभेदप्रतियोगित्वम् । तथा चैवम्भूतेनानुमानेनापि घटादेः कल्पितत्वसिद्धिः । "-इति ।

तत्रोच्यते—अत्र घटादय इत्यादिपदप्रवेशात् प्रपञ्चमात्रस्य कल्पितत्वसाधनमभिप्रेतमित्यवगम्यते । घटपटादीनां प्रपञ्चान्तर्गतानां सर्वेषां पदार्थानां घटत्वपटत्वादिना पक्षान्तर्भावोऽसर्वज्ञदुर्विज्ञेयत्वान्न सम्भवति । अनुगतानातिप्रसक्तं च पक्षतावच्छेदकं किमपि खण्डनकृता नोक्तम् । घटादीत्यादिपदेन ब्रह्मणोऽपि ग्रहणसम्भवे बाधः । पक्षतावच्छेदकस्य शुक्तिरजतसाधारण्ये सिद्धसाधनम् । घटत्वादिना प्रत्येकं घटादीनां पक्षीकारेऽपि पक्षतावच्छेदकस्यानिर्वचनीयघटादिसाधारण्यादवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे तस्य मिथ्यात्वाङ्गीकर्तृणाम्मते ऽसन्सिद्धसाधनम् अस्मन्मतरीत्या तस्य मिथ्यात्वाभावेन तत्र सिद्धसाधनाभावोपपादने दृष्टान्तासिद्धिः । प्रतिवादिभीरज्जुसर्पस्यापि मिथ्यात्वानङ्गीकारात् । घटादिकतिपयपदार्थमात्रे कल्पितत्वसिद्धावप्यर्थान्तरं दुर्वारम्, कृत्स्नस्य जगतः कल्पितत्वासिद्धेः । स्वतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारताव्यापकेत्यादिसाध्यमप्ययुक्तम् । सन् घट इत्यादि सतो विशेष्यत्वे तत्र घटतादात्म्यं भासत इत्यङ्गीकारेऽपि तस्य विशेष्यत्वेन प्रकारत्वाभावात्, सत्त्वावच्छिन्नत्वेन तस्यानिरवच्छिन्नत्वाभावात् ।

घटस्सन्निति ज्ञाने सतः प्रकारकत्वेऽपि तत्प्रकारताया निरवच्छिन्नत्वाभावात्। अस्मन्मते रज्जुसर्पादेर्ज्ञाननिवर्त्यत्वाभावेन दृष्टान्तश्च साध्यविकलः। साध्यघटकीभूतस्वत्वस्य दृष्टान्तपक्षसाधारण्याभावेन पक्षस्य स्वपदेन ग्रहणे दृष्टान्ते साध्यवैकल्यस्य, दृष्टान्तग्रहणे बाधस्य च प्रसङ्गः। हेतौ सत्ताया येन केनचिद्रूपेण साम्यविवक्षायां ब्रह्मणि व्यभिचारः। तत्रापि व्यावहारिकभेदप्रतियोगित्वसत्त्वात्। तस्यापि येन केनचित्प्रमेयत्वादिना ब्रह्मसमानसत्ताकत्वात् सत्ताविभाजकोपाधिना साम्यविवक्षायामसिद्धिः। एतदनुमानात्पूर्वं जगन्मिथ्यात्वासिद्ध्या व्यावहारिकादिभेदासिद्धेः। भेदप्रतियोगित्वमात्रेणैतादृशं मिथ्यात्वं न कैरपि तान्त्रिकैः क्वाप्यङ्गीकृतम्। रज्जुसर्पादीनां मिथ्यात्वं येऽङ्गीकुर्वन्ति तेऽपि न भेदप्रतियोगित्वेन हेतुना तदङ्गीकुर्वन्ति। अन्यथा तेषांम्मते सर्वेषामेव भेदप्रतियोगित्वेन सत्यमिथ्यार्थविभेदाभावप्रसङ्गात् तस्मान्नानेनानुमानेन जगतः कल्पितत्वसिद्धिरिति।

यत्तु—"अभ्युपगम्याप्युक्तविधपृथक्सिद्धत्वं जगत्सत्यत्वं चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा कथमुपपद्यते इति वक्तव्यम्। भगवद्विग्रहगोपुरप्राकारनित्यसूरिप्रभृतिनित्यविभूति प्रति ब्रह्मणः कारणत्वाभावेनोपादानत्वाभावादात्मत्वासम्भवो नात्मभूते तस्मिन् विज्ञातेऽपि तेषां विज्ञातत्वासम्भवात्।" इति।

तत्रोच्यते—"येनाश्रुतंश्रुतं भवत्यमतं मतम्" इत्यादिसद्विद्याप्रकरणगतमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यम्। "आत्मनि

सत्त्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातं भवति" इति मैत्रायणीयश्रुत्यनुसारादत्र इदं सर्वं—इति श्रुतेन मतेन विज्ञातेन,, इति चाध्याहारः। तथाच—येन श्रुतेनाश्रुतं श्रुतं भवति, येन मतेनामतं भवति येन विज्ञातेनाविज्ञातं भवति—इत्यर्थः। इदं सर्वमित्यस्य परिदृश्यमानस्थूलचिदचिच्छरीरकमिति तदर्थः श्रुतेन येनाश्रुतमिदं सर्वं श्रुतं भवतीत्यादिरीत्याऽर्थो बोध्यः। श्रुतेनेत्यस्य शाब्दबोधविशेषविषयेणेत्यर्थः। येनेति तृतीयार्थोऽभेदः श्रुतपदार्थान्वयी। अश्रुतमित्यस्य स्थूलरूपावच्छिन्नशाब्दबोधीयविषयताशून्यमित्यर्थः। तस्य च सर्वपदार्थेऽन्वयः तथा च—स्थूलावस्थावच्छिन्नशाब्दबोधीयविषयताशून्याभिन्नं प्रत्यक्षविषयस्थूलचिदचिच्छरीरकं ब्रह्म शाब्दबोधीयविशिष्टविषयतासूक्ष्मचिदचिद्वैशिष्ट्यावच्छिन्नशाब्दबोधीयविषयाश्रयो भवतीति वाक्यार्थः। अत्र च इदं सर्वमिति प्रत्यक्षविषयतया निर्दिष्टस्यैव कार्यभूतस्य जगतः कारणब्रह्मविज्ञानेन विज्ञातत्वं भवतीत्युच्यते इति। नित्यविभूत्यादीनामप्रत्यक्षाणामकार्यभूतानां कारणब्रह्मविज्ञानेन ज्ञातत्वासम्भवेऽपि नैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुपपत्तिः। छान्दोग्यगतसद्विद्याप्रकरणे इदं सर्वमिति पदाभावेन मैत्रायणीयश्रुत्यनुसारेण तत्पदाध्याहारान्नायमर्थो लभ्यत, इति चेत्? तर्हि तत्रैकविज्ञानेन सर्वविज्ञानमपि न प्रतिज्ञातम्। अपितु कारणविज्ञानेन कार्यविज्ञानमात्रम् सर्वपदाभावात्। किंच—तत्रैकविज्ञाने न सर्वविज्ञानप्रतिज्ञोपपादनप्रकरणे "सदेव सोम्येदमग्र आसीदि" ति प्रत्यक्षतया परिदृश्यमानं

जगत् इदमिति निर्दिश्य, तस्य प्रलये सद्रूपतापत्तिं प्रतिपाद्यानन्तरं जगत्सृष्ट्यादिप्रतिपादनमुखेन तस्यैव सच्छब्दवाच्यब्रह्मकारणता-मुपदिश्य दृष्टान्तप्रदर्शनादिना कारणविज्ञानेन कार्यविज्ञानस्यैव प्रतिज्ञानात् पूर्वोक्त एवार्थो लब्धो भवतीति नित्यविभूत्यादीनामकार्यभूतानां कारणविज्ञानेन विज्ञानासम्भवेऽपि नैकविज्ञानेन सर्वविज्ञान-प्रतिज्ञानुपपत्तिः ।

एतेन "ननु" इत्यारभ्य वियदादिवन्नित्यविभूत्यादीनाम-प्युत्पत्तिशंकासमाधानादिकमपि समाहितं वेदितव्यं तेषामनुत्पत्तावपि प्रतिज्ञानुपपत्त्यभावस्योपपादितत्वात् । "यथा सोम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं भवतीति दृष्टान्ते यथैकमृत्पिण्डारब्धकार्याणामेव ग्रहणं तथा दार्ष्टान्तिकेऽपि ब्रह्मकार्यभूतानामेव ग्रहणेनाकार्यभूता-नां नित्यविभूत्यादीनां ज्ञाततायाः प्रतिज्ञाविषयत्वस्यैवाभावेनादोषात् ।

एतेनैव-"एवं च स्थूलसूक्ष्मचिदचिद्विशिष्टब्रह्मण एककारणत्वं कार्यत्वं चेति पक्षो निर्मूल इति सिद्धम् ।"

इत्यपि निरस्तम् । प्रतिज्ञाविरोधादीनां परिहृतत्वेन तस्य पक्षस्य सम्यक् स्थापितत्वात् ।

विवर्तवादिनामेव च पक्षे एकविज्ञानेनन सर्वविज्ञानप्रतिज्ञान-मनुपपन्नमिति तु पूर्वमेवोक्तम् । विवर्तकारणज्ञानेन विवर्तज्ञानं भवतीत्यभ्युपगमेऽपि वा ऽनादिसिद्धाया अविद्याया ब्रह्मकारणक-त्वाभावेन तज्ज्ञानेन ज्ञातत्वासम्भव इति चात्र पुनरुच्यते ।

यत्तु-"चिदचितोः स्थूलत्वं सूक्ष्मत्वं कीदृशम् ? अणु-महत्परिमाणरूपमुत प्रत्यक्षयोग्यत्वतदभावरूपम् ?" नाद्यः,

अणोश्चिदंशस्यैकत्वे निरवयवत्वेन महत्परिमाणवत्त्वानुपपत्तेः। उपपत्तौ वा चिदंशस्यापि महत्परिमाणवत्त्वापत्त्या स्वसिद्धान्तविरोधोऽनित्यत्वं चापद्येयाताम्।" इति।

तत्रोच्यते—स्थूलत्वसूक्ष्मत्वे परिमाणरूपे एव। अणुत्वं च नास्मन्मते नैयायिकाद्यभिमताणुत्वरूपम्। अस्मन्मते जालकरन्ध्रविनिर्गत सौरालोकदृश्यमानत्रसरेणुशब्दवाच्यद्रव्यातिरिक्तपरमाणवनङ्गीकारात्। "अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देव एकीभवती" ति श्रुतिप्रतिपन्नतमस्त्वावस्थापन्नद्रव्यस्यैव मूलप्रकृतित्वेन तस्या भगवत्सङ्कल्पस्यानुरोधेन नानापरिणामवत्त्वस्य प्रमाणसम्प्रतिपन्नतया तत्रापत्तेरयोगात्। केवलयुक्तिकल्पितार्थेष्वेताहशापत्तीनां प्रदर्शनसम्भवेऽपि श्रुतिप्रतिपन्नार्थे "श्रुतेस्तु शब्दमूलत्वात्" इत्युक्तरीत्यैताहशाशङ्कानामयुक्तत्वात्। श्रौतेऽर्थे यथा श्रुतिप्रतिपत्तव्यमिति हि वैदिकाः। प्रकृतेर्निरवयवत्वं सावयवत्वं चेति कल्पद्वयमाकरेषु मुनिरूपितम्। प्रमाणप्रतिपन्नेऽर्थेऽपि युक्तिप्रसरकल्पनायां जलस्यैव शीतलत्वं कथम्, अग्नेरेवौष्ण्यं कस्मात्? इत्याद्याशङ्कानामवतारप्रसङ्गात्। "अत एव हि" "शक्यस्सर्वभावानामचिन्त्यज्ञानगोचराः। भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता॥" इत्याद्युक्तं पुराणरत्ने। निरवयवस्यापि महत्परिमाणाङ्गीकारे चिदंशस्यापि महत्परिमाणापत्तिरित्युपहास्यम्। निरवयवस्यापि ब्रह्मणो महत्परिमाणवत्त्वाङ्गीकारात्। "एषोऽणुरात्मा चेतसा वेदितव्यः" इत्यादिप्रमाणप्रतिपन्नाणुपरिमाणवतश्चिदंशस्य युक्त्या-

भासेन महत्परिमाणवत्त्वापादनं च, पूर्वोक्तन्यायेनायुक्तम् ।

यत्तु—"चिदंशस्य चाणुत्वाभ्युपगमेन महत्त्वस्याङ्गीकारेऽ नित्यत्वापत्त्या सिद्धान्तविरोधापत्तेः ।"—इति ।

तन्न । अस्माभिर्जीवानामणुत्वेनाभ्युपगतानां साक्षात्सम्बन्धेन महत्त्ववत्त्वानभ्युपगमात् । आत्मधर्मभूतज्ञानस्य विभोस्सङ्कोचविकासाङ्गीकारेण तद्गतपरिमाणमादायैव जीवानां स्थूलसूक्ष्मावस्थोपपादनात् ।

यदप्युक्तम्—"प्रत्यक्षे महत्त्वस्य कारणत्वाच्चिदंशे प्रत्यक्षविषयत्वस्य कदाऽप्यभावेन चितिसूक्ष्मत्वस्थूलत्वयोर्वक्तुमशक्यत्वात् ।" इति

तदपि न, प्रत्यक्षे महत्त्वस्य हेतुत्वानङ्गीकारात् । न च परमाणूनां प्रत्यक्षापत्तिः, जालसूर्यमरीचिकास्थस्य त्रसरेणुशब्दवाच्यस्यैव परमाणुत्वेनेष्टापत्तेः । अस्माभिर्जीवेषु साक्षात्सम्बन्धेन महत्त्वानङ्गीकारेऽपि धर्मभूतज्ञानगतसङ्कोचविकासानुसारेण स्थूलसूक्ष्मावस्थयोरुपपादनाच्च ।

एतेन—"नामरूपविभागानर्हत्वं सूक्ष्मशब्दार्थः" इत्यारभ्योक्तं सर्वमपि समाहितम् । नामविभागानर्हावस्थायास्सूक्ष्मावस्थारूपत्वेऽपि तस्या अपि ज्ञानगतसङ्कोचावस्थावलम्बनेनैव निर्वाहात् ।

नामरूपविभागानर्हत्वस्य सूक्ष्मशब्दार्थत्वे, विभागस्य भेदैकरूपतया भेदस्य सार्वदिकत्वेन तदर्हताया उभयदशायामप्यविशिष्टत्वात्स्थूलावस्थायामपि 'सूक्ष्मत्वव्यवहारापत्ति' रित्यपि न । नाम्ना रूपेण च विभक्तव्यवहारानर्हत्वस्यैव नामरूपविभागानर्हत्वरूपतया विभागस्य नामरूपे संयोगमध्येऽन्तर्भावितस्य भेदरूपत्वाभावेन

तस्य सार्वदिकत्वाभावात्सर्वदा विभक्तव्यवहाराभावात्स्थूलावस्थायामपि सूक्ष्मत्वव्यवहारापत्तेरभावात्।

यत्तु—" किञ्च जिज्ञास्यमज्ञातं ब्रह्म सर्वथाऽसम्भावितं सम्भावयितुं 'जन्माद्यस्य यतः' इतिसूत्रेण श्रुत्युक्तजगज्जन्मादिकारणत्वं लक्षणं प्रतिपादनीयम्। तत्र जगच्छब्देन स्थूलचिदचिद्विशिष्टं ब्रह्म परिगृह्य तस्य कार्यत्वोपपादनद्वारा तत्कारणत्वेन ब्रह्म किमर्थं लक्षणीयम्? किं ब्रह्म स्वस्य कारणं भवति न वेति संशयः पूर्वं प्रसक्तः? येनैतादृशकार्यकारणभाव उच्यते। न खल्वनुन्मत्तः कोऽपि स्वस्य स्वयं कारणं भवति न वेति जिज्ञासते प्रतिपादयति वा। किंपुनस्तद् ब्रह्म यज्जिज्ञास्यामित्याशङ्कया हि जन्माद्यधिकरणं प्रवृत्तम्। कार्यकारणावस्थयोर्ब्रह्मणोऽभिन्नत्वेनोभयावस्थस्यापि तस्य पूर्वमज्ञातत्वात्कार्यावस्थापन्नस्याऽसम्भावितस्य तस्यैव लक्षणत्वकथनमसङ्गतमेव। प्रसिद्धं हि लक्षणं भवति नाप्रसिद्धम्—अतो ब्रह्मणः कार्यत्वप्रसाधनलक्षणस्य कथनमनुपपन्नम्।" इति।

तत्रोच्यते—" अथातो ब्रह्मजिज्ञासा " इत्यनेन ब्रह्मजिज्ञासाया कर्तव्यतायां विहितायाम्। किं पुनस्तद्ब्रह्म यज्जिज्ञास्यमुच्यत इत्याशङ्कायां " जन्माद्यस्य यतः " इत्यनेन जगज्जन्मादिकारणं ब्रह्मेत्युक्तम्। तच्च जगत्किंरूपमिति तु न तत्राधिकरणे विचार्यते। " सदेव सोम्येदमग्र आसीत् " इत्यारभ्य ब्रह्मणो बहुभवनसङ्कल्पपूर्वकं तेजोबन्नादिपदार्थसृष्टिमुक्त्वा, तस्य 'अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यादिना जीवशरीरकपरमात्मानुप्रवेशपूर्वकं नाम-

रूपव्याकरणप्रतिपादनादचिज्जीवविशिष्ट ब्रह्मैव तेजोऽवन्नादिरूप जगदित्यवगम्यते । " तत्सृष्ट्वा तदेवानुप्राविशत् । तदनु प्रविश्य सच्च त्यच्चाभवत् " इति श्रुत्यन्तरेऽपि परब्रह्मण एव जीवशरीरकस्यानुप्रवेशेन सत्यद्भाव उक्तः । तस्माचिदचिच्छरीरकं ब्रह्मैव जगदिति निश्चीयते जगत्तु यद्वा तद्वा भवतु । जगज्जन्मादिकारणं ब्रह्मेत्येतावदेव तेन सूत्रेण प्रतिपाद्यते । स्वस्य स्वयं कारणं भवति न वेति न संशयो नापि तत्समाधानं तस्मिन्नधिकरणे भवति, यत्तु कार्यावस्थापन्नब्रह्मणः पूर्वमज्ञातत्वात्तत्कारणत्वस्य लक्षणत्वकथनमसङ्गतमिति । तन्न । वस्तुतो ब्रह्मपर्यन्तस्यैव जगच्छब्दार्थत्वेऽपि वेदान्तज्ञानवता तादृशजगच्छब्दार्थज्ञानसम्भवेन लक्षणज्ञानमम्भवात् । अपरिचितवेदान्ताना ब्रह्मविशेषणीभूतचिदचिन्मात्रं जगद्बुध्यताम् । तावन्मात्रकारणतारूपेणैव जगत्कारणत्वबोधसम्भवेन लक्षणज्ञानोपपत्ते । इयमेव गतिर्जगच्छब्देन ब्रह्मभिन्नस्यैव ग्रहणमभ्युगच्छता पक्षेऽपि स्वीकर्तव्या । अन्यथा जीवानामप्यदृश्यमानत्वेन जगच्छब्दान्तर्भावेऽपि ज्ञानासम्भवात्तावन्मात्रकारणत्वमप्यप्रसिद्धं लक्षणं न भवितुमर्हति । स्थूलचिदचिच्छरीरकस्य ब्रह्मणः कार्यत्वं जगच्छब्दार्थत्वं च पूर्वमुपपादितमेवेति नात्रासम्भावितं किमपि । ब्रह्मणः कार्यत्वप्रसाधनपूर्वकं लक्षणत्वं नात्र सूत्रे कथ्यते, अपितु परिदृश्यमानस्य जगतो यस्य कस्यापि सत. कारणत्वमात्रं लक्षणं कथ्यते तेन न काचिदनुपपत्तिर्नाम ।

यत्तु-" कार्यत्वं वास्तवमुत कल्पितम् । आद्ये चिदचि-

द्वैतस्य ब्रह्मोपादानकत्वमभ्युपगच्छतां भवतां मते उपादानोपादेययोः कारकव्यापाराधीनत्वाय भेदस्याङ्गीकर्तव्यतया तदनुरोधेन ब्रह्मण्यपि भेदप्रसङ्गेनैकमेव ब्रह्मोभयावस्थं भवतीति सिद्धान्तभङ्गप्रसङ्गः—इति।

तत्रोच्यते—कल्पितत्ववास्तविकत्वकथा नास्माकं मते वास्तविकमेवास्माकं मते कार्यत्वम्। उत्पत्तिविनाशादयः कारणभूतस्य द्रव्यस्यावस्थाविशेष एव। द्रव्यस्य तत्तदवस्थत्वं कारकव्यापारायत्तमिति तस्य सार्थकता। अवस्थाश्रयद्रव्यस्य तु कार्यकारणावस्थयोरैक्यमेव न भेदः। मृद्द्रव्यस्यैकस्यैव घटत्वकपालत्वचूर्णत्वाद्यवस्थासूत्पद्यमानास्वप्यनुवर्तमानतादर्शनात्। सर्वमिदमुक्तमारम्भणाधिकरणभाष्ये—"यदुक्तं—सत्यामेव मृदि घटो नष्ट-इति व्यवहारात्कारणादन्यत्कार्यमिति। तदुत्पत्तिविनाशादीनां कारणभूतस्यैव द्रव्यस्यावस्थाविशेषत्वाभ्युपगमादेव परिहृतम्। तत्तदवस्थस्यैकस्यैव द्रव्यस्य ते ते शब्दास्तानि तानि च कार्याणीति युक्तम्। द्रव्यस्य तत्तदवस्थत्वं कारकव्यापारायत्तमिति तस्यार्थवत्त्वम्।" इति। तथा च ब्रह्मणः कार्यकारणावस्थयोरेकत्वेऽप्यवस्थोत्पत्त्या कारकव्यापारसार्थक्याद्भेदप्रसङ्गाभावेनास्मत्सिद्धान्तभङ्गस्य नास्ति प्रसक्तिलेशोऽपि। उपादानोपादेययोर्भेदस्यावश्यकताकथनं त्वसत्कार्यवादिनामेव शोभते।

यत्तु—"स्वं यदि स्वजन्यं स्यात् तदा स्वभिन्नं स्यात्" इति तर्कप्रदर्शनम्। तत् मृदः कारणभूतस्यैव घटरूपेण जन्यत्वदर्शनात्प्रत्यक्षपराहतस्तर्क इत्युक्तमेव।

यत्तु—"एवं च" त्यारभ्य, धर्मान्यथाभावस्यापि स्वरूपान्यथाभाव एव पर्यवसानात् परमेश्वरो ऽनित्य—विकारास्पदत्वात् इति शक्यमनुमातुमिति पूर्वोक्त्यैव पुनरुक्तम् । तत्स्वरूपान्यथाभावधर्मान्यथाभावयोर्विभेदस्य पूर्वमेव निरूपिततया, ब्रह्मण्युभयोरपि तयोरभावस्य च निरूपिततया साक्षात्सम्बन्धेन विकाराभावेनानित्यत्वानुमानासम्भवात् । अत्र वक्तव्यं सर्वमपि पूर्वोक्तं न पिष्टपेषणं क्रियतेऽत्र ।

एतेन—पूर्वोक्तानुमाने साक्षात्सम्बन्धेन परिणामरूपविकारवत्त्वस्योपाधित्वं परिहारकृदुक्तमयुक्तमित्युक्तमपास्तम् । ब्रह्मणि साक्षात्सम्बन्धेन परिणामाभावस्य पूर्वं निरूपितत्वात् ।

यदपि—"वस्तुत उपाध्युद्भावनं लेखकस्याज्ञानमूलकमेव शास्त्रिमहाशयेन हि विकारिवैशिष्ट्यस्य स्वरूपतादात्म्यसम्बन्धरूपत्वे विकारित्वेन सावयवतयाऽनित्यत्वापातादित्युक्त्वेदमनुमानं प्रदर्शितम् । तस्मिन्ननुमाने साक्षात्सम्बन्धेन परिणामवत्त्वस्योपाधित्वकथन पक्षे साधनाव्यापकत्वप्रदर्शनं च कथं शोभते"—इति ।

तदपि न ब्रह्मनिष्ठस्य विकारिवैशिष्ट्यरूपस्य विकारस्य स्वरूपत्वे वा तादात्म्यसम्बन्धरूपत्वेऽपि वा तस्यपरिणामरूपत्वाभावेन, साक्षात्सम्बन्धेन ब्रह्मणि परिणामरूपविकाराभावेन तादृशोपाधेस्साधनाव्यापकत्वकथनस्य सुसङ्गतत्वात् विकारिवैशिष्ट्यं च विकारिसंयोगविशेषरूपमिति च पूर्वमेवोक्तम् ।

परमेश्वरोऽनित्यः विकारास्पदत्वादिति स्वप्रदर्शितेऽनुमाने

यत्तु—"सङ्कोचविकासयोरनित्यत्वापादकत्वं नास्तीति-कथनं च स्वमाप्यविरुद्धं, यथाश्रुतप्रतिपत्तृशिष्यप्रज्ञाप्रतारण-मात्रं च, भवद्भाष्यकारेण हि-जीवस्य पुत्तिकाशरीरपरिमाणस्य गजादिशरीरेष्वकात्स्न्र्यमिति दोषमुद्भाव्य सङ्कोचविकासा-भ्यामुक्तदूषणाभावशङ्कायां—'नच पर्यायादप्यविरोधो विका-रादिभ्यः, इति सूत्रेण, विकारतत्प्रयुक्तानित्यत्वादिदोषप्रस-क्त्या जैनमते जीवस्येव धर्मज्ञानस्यापि सङ्कोचविकासशालि-नो घटादिवदनित्यत्वस्य प्रतिष्ठापनात्।" इति।

तत्रोच्यते—जीवानां शरीरपरिमाणत्वाङ्गीकारे हस्त्यादिशरीरे-ऽवस्थितस्यात्मनस्ततो न्यूनपरिमाणे पिपीलिकादिशरीरे प्रविशतो-ऽल्पदेशव्यापित्वेनापूर्णता प्रसज्यते—इति "एवं चात्माऽकात्स्न्र्यम्" इति सूत्रेणोक्तम्, तदुपरि आत्मनस्सङ्कोचविकासरूपावस्थाङ्गीका-रान्नायं दोष इत्याशङ्कायां "नच पर्यायादप्यविरोधो विकारादिभ्यः" इत्यनेन दूषणमुच्यते। आत्मस्वरूपस्य सङ्कोचविकासाङ्गीकारे ज-न्मनाशादिविकारतत्प्रयुक्तानित्यत्वादिदोषप्रसक्तेर्घटादितुल्यत्वप्रसङ्ग इति तत्सूत्राभिप्रेतोऽर्थः। अत्रेदं बोध्यम्—तपनातपरत्नालोकादीनां स्थिरधर्मिधर्मभूतानां सङ्कोचविकासवतामपि यावद्धर्मिसम्बन्धं विनाशो नोपलभ्यते। आश्रयनाशे सत्येव नाशो भवति। यस्य स्वरूपमेव सङ्कोचविकासशालि, तस्य धर्मिणस्सङ्कोचविकासवतो जन्मनाशा-दिविकारवत्त्वमवर्जनीयमनित्यत्वं च। घटादीनां तथाविधानां तथात्वोपलम्भात्। एवं च नित्यजीव स्वरूपाश्रितधर्मभूतज्ञान-स्यापि सङ्कोचविकासशालिनोऽप्याश्रयस्वरूपस्य नित्यत्वान्न विनाशा-

जडत्वस्योपाधिमाशङ्क्य धर्मभूतज्ञानप्रकाशान्तर्भावेन साध्याव्यापकत्वान्न तस्योपाधित्वमित्युक्तं विश्वेश्वरशास्त्रिणा परिहारकृता तु प्रकाशाख्यः कश्चनातिरिक्तो धर्म एव नास्तीति न साध्याव्यापकतेत्युक्तम् । अत्राह खण्डनकारः—

"स्फुरणस्वरूपस्यैव पदार्थस्याङ्गीकारेण तस्यैव त्वदीयोपाधेः साध्यव्यापकत्वासम्भवात् । त्वयैव रूपान्तरेण व्यवहारानुगुण्यरूपस्य तस्य धर्म्यतिरिक्तस्य स्वीकारात् । धर्म्यनतिरिक्तत्वेऽपि सङ्कोचविकाससत्त्वेनानित्यत्वस्यापि सत्त्वादुपाधेस्साध्याव्यापकत्व एव विश्रामात्"— इति ।

अत्र ब्रूमः—धर्मभूतज्ञानस्य नित्यत्वमस्मदभ्युपगतम् । सङ्कोचविकासावस्थे तस्य स्तः । तस्य प्रकाशो व्यवहारानुगुणता, नातिरिक्तो धर्मः । इत्थं च सति प्रकाशाख्ये धर्मे जडस्यानित्यत्वाव्यापकत्वोपपादनं कथं सङ्गच्छते । व्यवहारानुगुण्यमित्युक्तत्वात्तस्य धर्मत्वं स्वीकृतमिति खण्डनकारो वदति, तच्च धर्मिस्वरूपं नातिरिक्तमिति वयं वदामः । धर्मिस्वरूपं चाजडम् । तथा च कथं तदवच्छेदेन साध्यव्यापकत्वं जडत्वस्य । अन्धकारावस्थितो घटो न प्रकाशते । स एव सूर्यालोके सति प्रकाशते । तत्र सूर्यालोकाभावदशायां धर्मिस्वरूपातिरिक्तः कोऽपि नवीनः प्रकाशाख्यः पदार्थो नोत्पन्नः केनाप्यनुभूयते । व्यवहारानुगुण्यमात्रं सम्पाद्यते तस्यालोकेन । तद्वदेवात्रापि ज्ञानस्य कदाचिद्व्यवहारानुगुण्यं भवति कदाचिन्न भवति । तावताऽतिरिक्तपदार्थाङ्गीकारो न युक्तः तस्माज्जडत्वस्य साध्यत्वव्याप्यकताऽपि प्रतिपक्षिमते भवत्येव, इति ।

यत्तु-"सङ्कोचविकासयोरनित्यत्वापादकत्वं नास्तीति-कथनं च स्वभाष्यविरुद्धं यथाश्रुतप्रतिपत्तृशिष्यप्रज्ञाप्रतारणमात्रं च, भगवद्भाष्यकारेण हि जीवस्य पुत्तिकाशरीरपरिमाणस्य गजादिशरीरेष्वकात्स्न्र्यमिति दोषमुद्भाव्य सङ्कोचविकासाभ्यामुक्तदूषणासावशङ्कायां—' नच पर्यायादप्यविरोधो विकारादिभ्यः, इति सूत्रेण, विकारतत्प्रयुक्तानित्यत्वादिदोषप्रसक्त्या जैनमते जीवस्येव धर्मज्ञानस्यापि सङ्कोचविकासशालिनो घटादिवदनित्यत्वस्य प्रतिष्ठापनात्। " इति।

तत्रोच्यते—जीवानां शरीरपरिमाणत्वाङ्गीकारे हस्त्यादिशरीरेऽवस्थितस्यात्मनस्ततो न्यूनपरिमाणे पिपीलिकादिशरीरे प्रविशतोऽल्पदेशव्यापित्वेनापूर्णता प्रसज्यते—इति " एवं चात्माऽकात्स्न्र्यम् " इति सूत्रेणोक्तम्, तदुपरि आत्मनस्सङ्कोचविकासरूपावस्थाङ्गीकारान्नायं दोष इत्याशङ्कायां "नच पर्यायादप्यविरोधो विकारादिभ्यः" इत्यनेन दूषणमुच्यते। आत्मस्वरूपस्य सङ्कोचविकासाङ्गीकारे जन्मनाशादिविकारतत्प्रयुक्तानित्यत्वादिदोषप्रसक्तेर्घटादितुल्यत्वप्रसङ्ग इति तत्सूत्राभिप्रेतोऽर्थः। अत्रेदं बोध्यम्—तपनातपरत्नालोकादीनां स्थिरधर्मिधर्मभूतानां सङ्कोचविकासवतामपि यावद्धर्मिसम्बन्धं विनाशो नोपलभ्यते। आश्रयनाशे सत्येव नाशो भवति। यस्य स्वरूपमेव सङ्कोचविकासशालि, तस्य धर्मिणस्सङ्कोचविकासवतो जन्मनाशादिविकारवत्त्वमवर्जनीयमनित्यत्वं च। घटादीनां तथाविधानां तथात्वोपलम्भात्। एवं च नित्यजीवस्वरूपाश्रितधर्मभूतज्ञानस्यापि सङ्कोचविकासशालिनोऽप्याश्रयस्वरूपस्य नित्यत्वान्न विनाशा-

दिप्रसङ्गः । जीवस्वरूपस्यैव सङ्कोचविकासाङ्गीकारे तु तस्य जन्मनाशादिविकारवत्त्वमनित्यत्वं च घटादिवदेव प्रसज्यत इति ।

इदमत्र तत्त्वम्—अपृथक्सिद्धिसम्बन्धेन नाशं प्रति अपृथक्सिद्धिसम्बन्धावच्छिन्नाधेयतासम्बन्धेन द्रव्यस्य प्रतिबन्धकत्वमनुभवानुरोधादङ्गीकार्यम् । तपनातपरत्नालोकादीनां सङ्कोचविकासवतामपि यावदाश्रयसम्बन्धं विनाशादर्शने नैताद्दशप्रतिबध्यप्रतिबन्धकभावकल्पनस्यावश्यकत्वात् एताद्दशप्रतिबध्यप्रतिबन्धकभावाङ्गीकारेणैव च नैयायिकादिभिर्नित्यगतैकत्वादीनां नित्यत्वं संरक्षणीयम् । तैः प्रतियोगितासम्बन्धेन नाशं प्रति समवायसम्बन्धावच्छिन्नाधेयतासम्बन्धेन द्रव्यस्य प्रतिबन्धकत्वस्य कल्पनीयत्वात्, तथा च प्रकृते धर्मज्ञानस्य सङ्कोचविकासशालिनोऽपि नविनाशापत्तिः । प्रतिबन्धकसद्भावात् । जीवस्वरूपस्य सङ्कोचविकासाङ्गीकारे तु तस्य विनाशादिकमवर्जनीयमिति । "ज्ञानं चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यम्" इति भगवान् भाष्यकारः । "नच पर्यायादप्यविरोधो विकारादिभ्यः" इति सूत्रभाष्यटीकायां धर्मभूतज्ञाननित्यत्वाक्षेपपूर्वकमित्थमेव समाहितं वर्तते । तथा च तत्रत्या टीका—"ननु त्वन्मते धर्मभूतज्ञानस्य सङ्कोचविकासाभ्युपगमे कथं नित्यत्वादि ? स्वरूपेण नित्यस्य वस्तुनो निरुपाधिकधर्मत्वादिति ब्रूमः" । इति । तस्मान्नास्माकं मते धर्मभूतज्ञानस्य सङ्कोचविकासशालिनोऽपि घटादिवदनित्यत्वप्रसङ्ग इति ।

यत्तु—" सङ्कोचविकासावयवविनाशोत्पत्तिरूपौ, तत्कथं

सङ्कोचविकासादिधर्मकस्य नित्यत्वं स्यात् "-इति ।

तन्न । तपनातपमणिकिरणादीनां सङ्कोचविकासयोरवयवविनाशोत्पत्तिरूपत्वादर्शनात् । अन्यथा प्रतिक्षणं सङ्कोचविकासयोर्जायमानयोर्विशीर्णावयवकत्वेन तपनादीनां प्रतिक्षणविनाशप्रसङ्गात् ।

एतेनैतत्सम्बन्धिनोऽन्येऽपि प्रसङ्गा निरस्ता वेदितव्याः । सङ्कोचविकासयोर्जायमानयोरवयवविनाशोत्पत्त्योरङ्गीकारे सति प्रतिक्षणं नवनवद्रव्योत्पत्तिप्रसङ्गादेव ।

यत्तु-" एवम्भूतधर्मभूतज्ञानाश्रयत्वं ज्ञानरूपस्य धर्मिणः । एतत्तान्त्रिकसम्प्रदायविरुद्धं । तथा विभुरूपधर्मस्याश्रयत्वमणोः । विभुनस्सङ्कोचविकासवत्त्वं च । " इति ।

तन्न । ज्ञानरूपस्यैवात्मनो " विज्ञातारमरे केन विजानीयात्" " जानात्येवायं पुरुषः " इत्यादिभिः प्रमाणैर्ज्ञानाश्रयत्वप्रतिपादनेन यथाप्रमाणमभ्युपगच्छतामस्माकं यत्किञ्चित्तान्त्रिकसम्प्रदायविरोधस्याकिञ्चित्करत्वात् । तेजोद्रव्यस्य दीपादेः प्रभाख्यतेजोद्रव्याश्रयत्ववत्तदुपपत्तेश्च । " एषोऽणुरात्मा " इत्यादिभिरात्मनोऽणुत्वस्य " सर्वं ह पश्यः पश्यती " त्यादिभिर्धर्मभूतज्ञानविभुत्वस्य च प्रमाणप्रतिपन्नत्वेन तत्र केवलयुक्तेरकिञ्चित्करत्वात् । " न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते " इत्यादिभिर्धर्मभूतज्ञानस्य नित्यतालाभेन सङ्कोचविकासस्वीकारमन्तरा नष्टमुत्पन्नमित्यादिव्यवहारनिर्वाहासम्भवेन तथा स्वीकारात् ।

यदपि-" धर्मस्य ज्ञानरूपत्वाङ्गीकारे धर्मिणो ज्ञानरूपत्वाङ्गीकारे किमपि प्रयोजनं न पश्यामः । " इति ।

तदपि न। प्रयोजनानुसारेणास्माभिरस्यार्थस्य कल्पने प्रयोजनाभाववर्णनस्य युक्तत्वेऽपि यथाप्रमाणमभ्युपगच्छतां प्रयोजनाभावस्याकिञ्चित्करत्वात्।

यदपि—"जडत्वस्य साध्यव्यापकत्वसाधनं तु न प्रमाणपदवीमधिरोहति।"—इति।

तदपि न। तत्र दोषस्याप्रदर्शनेनानित्यानां सर्वेषां जडत्वदर्शनेन च प्रमाणपदव्यारोहणात्।

यच्च—द्वितीयविरोधाभाससमर्थनाय प्रवृत्तेन खण्डनकारेणोक्तम्—"सोऽपि कोलाहलमात्रपर्यवसाय्येव" इत्यादि। तदिदमयुक्तम्। कृतिमत्त्वमात्रेणात्मनस्स्वरूपान्यथाभावप्रसङ्गः। नैयायिकादिभिरप्यात्मनः कृतिमत्त्वमभ्युपगच्छद्भिर्न स्वरूपहानिरुद्भाविता।

यत्तु—"कृतेरपि धर्मत्वेन तस्यानित्यत्वानभ्युपगमात् परिणामभूतत्वस्यैव वक्तव्यत्वेनात्मगतत्वाङ्गीकारे आत्मपरिणामत्वमवश्यं वक्तव्यम्।

इति खण्डनकृतोक्तम्। तत्रेदं विचार्यते। नित्यत्वानभ्युपगमात्परिणामभूतत्वस्यैव वक्तव्यतयेति वदतोऽनित्यत्वे परिणामभूतत्वव्याप्यत्वमभिप्रेतं भवति। तर्हि व्यस्मार्षीदसौ निजसमयम्। अविद्या खल्वात्मैक्यापरोक्ष्यविनाश्या। सा न कस्यचित्परिणतिः। यदि च नित्यत्वशब्देन प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं विवक्ष्यते? किं तेन? अविद्या तादृशनित्यत्वाभाववत्येव। ननूक्तं नित्यत्वानभ्युपगमादिति। आशयस्तु जन्यत्वाभावानभ्युपगमादित्ये-

वेति चेत् ? मनस्यन्यद्वचस्यन्यत् । नहि प्रयुक्तोऽयं शब्दोऽभिप्रेतमर्थं गमयति । किंच,–रूपादिजन्यमपि विनाश्यपि न कस्यचित्परिणतिः । द्रव्यत्वाभ्युपगमादित्यपि पूर्यत इति चेत् ? पूर्यतां नामेतः परम् । इदानीं तु प्रकटिते लेखे गर्त एव अहो वाक्यग्रथनकौशलम् ।

यदपि–"आत्मगतत्वाङ्गीकारे आत्मपरिणामरूपत्वमवश्यं वक्तव्यम्"–इति ।

तदप्यसत् । कृतिरात्मनो धर्म इत्येतावता कथमात्मपरिणामरूपता तस्या आपद्येत । नहि धर्मधर्मिणोरभेदस्सम्मतः । तस्मात्कृतिरात्मगताऽप्यात्मनो न परिणतिः । ननु मृत्पिण्डगतो हि घटः परिणामभूतो मृत्पिण्डस्यैव, कनकगतानि कटकमकुटादीनि कनकपरिणामभूतानि दृष्टानि । मैवम् । नहि घटादयो मृत्पिण्डगताः । नचाऽवयवावयविनोराधाराधेयभावः परंतु तादात्म्यमेव । ननु प्रागुपादाने विद्यमानस्यैव कार्यस्य पश्चादाविर्भाव इति खलु सत्कार्यवादः । यदि घटादयो न मृत्पिण्डादौ, कथमेतदुपपत्तिरिति चेत् ? हन्त भगवद्रामानुजसिद्धान्तानभिज्ञस्य भाषितम् । सत्कार्यवादस्वरूपं श्रीभाष्ये निपुणमुपपादितम् । कापिलवासनावासितेन तु स्वैरमुद्धोष्यते किमपि । नात्र मृत्पिण्डघटयोरिवाधाराधेयभावोऽपि । ननु–'कृतेरपी' त्यादिना 'आत्मगतत्वाङ्गीकार' इत्यन्तेन कृतेः परिणामरूपत्वमात्मधर्मत्वं चेत्युपपादितम् । तथाविधकृतेरात्मपरिणामत्वापादकं तु "पूर्वं हि' स्वरूपान्यथाभावधर्मान्यथात्वविकारवैशिष्टयस्वरूपाणां विकाराणामेकरूपत्वस्यैव व्यवस्थापितत्वेन जीवे धर्मान्यथा-

त्वस्य च त्वयैवाङ्गीकृतत्वेन " इत्येतदन्तेनोपपादितम् । तदविचार्य क्रियमाणं पश्चात्तनवाक्यदूषणं साहसमेव व्यनक्तीति चेत् ? तद्विचार्यमाणं विशेषतो हानय एव खण्डनकारस्य । तथाहि—स्वरूपान्यथात्वधर्मान्यथात्वविकारविशिष्टरूपविकारत्रयस्यैकरूपत्वेन जीवे धर्मान्यथात्वस्वीकारेण च कस्यनित्परिणतिभूताया आत्मधर्मभूतायाः कृतेरात्मरिणामत्वापादनं कथम् ? त्रयाणां विकाराणां विकारत्वेनैव हि साम्यम्, न तु स्वरूपान्यथाभावत्वादिना। तथात्वे खलु तद्युज्येत । धर्मान्यथाभावस्यापि स्वरूपान्यथाभावरूपत्वं तु निरस्तं प्रागेव । यत्तु " यदि कृतेर्नित्यत्वमभविष्यत् आत्मधर्मत्वं वा नाभविष्यत्, तर्हि नात्मपरिणामरूपत्वं तस्याभविष्यत् " इति । तत् किं यो यस्य धर्मोऽनित्यश्च स तत्परिणाम इति कोऽपि नियमो भवति ? घटधर्मभूतस्यानित्यस्य घटरूपस्य घटपरिणामत्वं न दृश्यते तत्कुतो हेतोः ?

यदुक्तं—तृतीयविरोधपरिहारं खण्डयता खण्डनकारेण-" धर्मज्ञानस्यात्मशब्दार्थत्वं स्वीक्रियते न वा ? यदि स्वीक्रियते तर्हि आत्मनो विभुत्वमणुत्वं चोक्तमिति व्याघातेन पूर्वापरविरोधः प्रसज्येत । "—इति ।

तत्रेदमुत्तरम्—धर्मभूतज्ञानस्यात्मशब्दार्थत्वं न स्वीक्रियते इति । परिहार एवायमर्थ उक्तः । " आत्मा हि धर्मी, स च यद्यपि ज्ञानरूपः । अथापि तस्य धर्मज्ञानशब्दितत्वं नास्मत्सिद्धान्ते । धर्मभूतज्ञानं ह्यात्मनो धर्मिणो धर्मतयाऽस्माभिस्स्वीकृतम् । " इत्यादिना । तथा चात्मनोऽणुत्वमात्रमेव । धर्मभूतज्ञानस्यैव विभुत्वम् ।

यदप्युक्तम्—"यदि न स्वीक्रियते तर्हि जैनमते ये दोषास्ते भवता स्वपक्षे प्रसज्यमाना न परिहर्तुं शक्यन्ते। सूत्रकृता हि शरीरपरिमाण आत्मेति पक्षे क्रमेण पुत्तिकाशरीरस्थस्यात्मनो गजादिशरीरप्राप्तावकार्त्स्न्यदोषः प्रदर्शितः आत्मशब्दार्थस्याणुत्वे सुतरामकार्त्स्न्यं प्रसज्येतेति धर्मज्ञानद्वारैव स दोषः परिहर्तव्य" इति।

तदिदमसारम्। आत्मनोऽणुत्वेऽप्यात्माकार्त्स्न्यदोषप्रसक्तेरभावात्। "एवं चात्माकार्त्स्न्यम्"—इति सूत्रे विवक्षितमात्मनोऽकार्त्स्न्यम्—अपरिपूर्णत्वरूपम्। तच्चैव प्रसज्यते जैनमते—आत्मनः शरीरपरिमाणत्वे, हस्तिशरीरेऽवस्थितस्यात्मनस्ततो न्यूनपरिमाणशरीरप्रवेशे सति शरीरपरिमाणत्वसम्पत्तये आत्मैकदेशस्य तत्रामातस्तच्छरीराद्बहिरेवावस्थानमावश्यकमित्यकृत्स्नता—अपरिपूर्णता भवतीति। न चास्माकं मते शरीरपरिमाण आत्मा। येनैवमधिकपरिमाणस्य सतो न्यूनपरिमाणशरीरप्रवेशप्रयुक्तमकार्त्स्न्यं प्रसजेत्। अपि त्वणुपरिमाण एव सदा। अणुरेवात्माल्पशरीरान्महच्छरीरं वा महतोऽल्पं वा प्रविशन् स्वरूपेणैव प्रविशति। नचात्मनश्शरीरपरिमाणत्वसम्पादनाय न्यूनाधिकभावः कल्पनीयः। एवं चाकार्त्स्न्यपरिहारो धर्मज्ञानद्वारा कर्तव्य इत्यनुपपन्नम्। कृत्स्ननिरवशेषशब्दौ पर्यायतया प्रयुज्यमानौ दृष्टौ, कृत्स्नमानय—निरवशेषमानयेति समानार्थतया प्रयोगात्। तत् कार्त्स्न्यं चेन्निरवशेषत्वम्—अकार्त्स्न्यं सावशेषत्वरूपं भवति। तथा चात्मनोऽकार्त्स्न्यं नाम सावशेषत्वमेव। तच्चाधिकपरिमाणस्य सतो न्यूनपरिमाणशरीरप्रवेशे सति कस्यचिद्भाग-

स्यावशेषाद्भवति। ननु न्यूनपरिमाणस्याधिकपरिमाणशरीरप्रवेशे। तदाहि शरीराकार्त्स्न्यं स्यात्। आत्मना न्यूनपरिमाणेनाऽव्याप्तस्य शरीरांशस्य सावशेषत्वात्। अत एव च सूत्रस्यास्य 'पुत्तिकाशरीरस्थस्यात्मनो हस्तिशरीरं प्रविशतोऽकार्त्स्न्यं भवतीति व्याख्यानमुपेक्षणीयम्। इदं च शरीरपरिमाणत्वमङ्गीकुर्वतां मते प्रसज्यते। अस्माकं त्वणुपरिमाणमात्मानमभ्युपगच्छतां शरीरस्य हृदयस्थाने स्थितमङ्गीकुर्वतां एकदेशस्थस्यापि तस्य "गुणाद्वालोकवत्" इति सूत्रोक्तप्रक्रियया ज्ञानद्वारा सकलशरीरावच्छेदेन सुखदुःखोपलब्धिं समर्थयतां नायं दोषः प्रसज्यते।

यत्तु—"तथा सति सर्वाङ्गीणसुखदुःखाद्युपलम्भकर्तृत्वं धर्मस्यैव न धर्मिण इत्यापत्त्या अणोर्जीवस्याप्यप्रसङ्गेन 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह' इत्यादिस्मृत्युक्तात्मलक्षणस्य धर्म एव सद्भावाद्धर्मिण्यभावाच्च नाणोरात्मत्वं स्यात्।"—इति।

तन्मन्दम्। सूर्यदीपादीनां आतपादिद्वारा तापादिकर्तृत्ववदात्मनो ज्ञानद्वारा सुखदुःखाद्युपलब्धृत्वस्योपपत्तेः। अन्यथा तत्रापि आतपादीनामेव तापादिकर्तृत्वं न सूर्यादेरित्यापत्तौ "याभिरादित्यस्तपति रश्मिभिः" इत्यादिप्रयोगानुपपत्तेः। तत्र आतपादीनां साधनमात्रत्वेऽत्रापि तथात्वसम्भवात्। अणुपरिमाणस्याप्यात्मनश्शरीरान्तर्व्याप्तिविषयादनादेश्च सम्भवेन स्मृत्युपरोधाभावाच्च।

"एवम्भूतस्य च ज्ञानस्य सङ्कोचविकासावभ्युपगच्छता जैनवदात्मनोऽपि शरीरपरिमाणत्वमेव स्थापितम्। अभि-हितत्वात्"

इत्यपि मन्दम् आत्मनस्तद्धर्मभूतस्य ज्ञानस्य च भेदव्यवस्थापनात्, धर्मभूतज्ञानस्यापि कृत्स्नशरीरव्यापिनस्सङ्कोचविकासाङ्गीकारमात्रेण शरीरपरिमाणत्वाभावस्य पूर्वमेव निरूपितत्वात् । आत्मनश्शरीरपरिमाणत्वप्रसक्तेरेवाभावात् ।

" न च पर्यायादप्यविरोधो विकारादिभ्यः " इति सूत्रभाष्ये सङ्कोचविकासयोर्विकारित्वानित्यत्वापादकत्वकथनं तु स्वरूपगतसङ्कोचविकासाभिप्रायकं नतु नित्यस्वरूपाश्रितधर्मगतसङ्कोचविकासाभिप्रायकमिति प्रथमविरोधपरिहारसमर्थनावसर एव निरूपितमिति तदुपष्टम्भेन "

" इत्यादिभाष्येण सङ्कोचविकासवत्त्वस्य विकारित्वानित्यत्वादिदोषप्रसञ्जकत्वस्योक्तत्वात् "

, इत्यादिना यदुक्तम् । तद् दूरापास्तम् ।

यत्तु " भवद्भाष्येणापि धर्मधर्मिणोरभेद एव प्रतिभासते । एवं हि भाष्यम्–' एतदुक्तं भवति यथा एकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते । यद्यपि प्रभाप्रभावद्द्रव्यगुणभूता, तथापि तेजोद्रव्यमेव । न शौक्ल्यादिवद्गुणः । स्वाश्रयादन्यत्रापि वर्तमानत्वाद्रूपवत्त्वाच्च तेजोद्रव्यमेव । एवमात्मा चिद्रूप एव चैतन्यगुणक इति । चिद्रूपता च स्वयंप्रकाशता । ' इति । अत्र हि ' एकमेव तेजो द्रव्यम् ' 'तेजोद्रव्यमेव ' 'नार्थान्तरम् ' इत्यादि शब्दैः प्रभाप्रभावतोरभेदः स्पष्टं प्रतिभासते । इतरथा ' एकमेव ' इतिशब्दस्यासाङ्गत्यप्रसङ्गात् । 'एवमात्मा चिद्रूप एव चैतन्यगुणक ' इति

शब्देन दीपदृष्टान्तेन धर्मधर्मिणोरभेदं सूचयति भाष्यकारः ।—इत्यादि ।

तन्मन्दम् । यथा घटशरावदीपादयस्तत्तद्व्यक्तित्वेन भिन्नाः सन्तोऽपि मृद्द्रव्यमेव । नार्थान्तरम् । तथा प्रभाप्रभावन्तावपि तेजोद्रव्यमेव नार्थान्तरम् । अत्र चोभयोस्तेजस्त्वजात्यनुवृत्तिमात्रमभिप्रेतम् । न तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावोऽपीति स्पष्टम् । एवमेव च आत्मतद्धर्मभूतज्ञानयोः परस्परं तत्तद्व्यक्तित्वेन भिन्नयोरपि ज्ञानत्वमविशिष्टम् । ज्ञानत्वं च स्वयम्प्रकाशत्वम् । इदमेव च भाष्यतात्पर्यम् । नतु धर्मधर्मिणोर्व्यक्त्यैक्यमप्यभिप्रेतम् । "यद्यपि प्रभाप्रभावद्द्रव्यगुणभूता तथापि तेजोद्रव्यमेव" इति वाक्येन हि प्रभायाः प्रभावतो द्रव्यस्य गुणभूतत्वं–विशेषणीभूतत्वं स्पष्टमेवोच्यते । उभयोरपि प्रभाप्रभावतोरेकजातीयद्रव्यत्वाभिप्रायेण तु "तेजोद्रव्यमेव" इत्युक्तम् । न स्वद्रव्यभूतं नापि तेजोभिन्नद्रव्यमिति चाभिप्रायः । तस्मादेतद्भाष्यावष्टम्भेनास्मन्मते धर्मधर्मिणोरभेदस्याङ्गीकृतत्ववर्णनमयुक्तमेव ।

यत्तु-प्रभायास्सङ्कोचविकासावस्थयोः परिमाणरूपत्वाभावं परिहरेदुक्तमाक्षिपन् खण्डनकारः प्राह–"मानव्यवहारासाधारणकारणं हि परिमाणम् । यादृशमानव्यवहारो जायते तदुचितपरिमाणमेव स्वीकर्तव्यम् ।"—इति ।

तत्र ब्रूमः–परिमाणं कादाचित्कं न भवत्यौपाधिकं वा अपितु द्रव्यस्यानौपाधिकस्स्वाभाविकश्च धर्मः । अतएव सङ्कोचविकासावस्थयोः परिणामरूपत्वं न भवति । अन्यथा दशहस्तदीर्घस्य

सर्पस्य कुण्डलितस्याल्पपरिमाणत्वं प्रसृतस्याधिकपरिमाणत्वं च स्यात्। दशहस्तदीर्घं किमप्यान्तरीयं सङ्कोचितमेकहस्तादि दीर्घं स्यात्। तथात्वे प्रतिदिनमापणेषु विक्रीयमाणनाम्पीताम्बरादीनां सङ्कोचितानां दशहस्तत्वादिव्यवहारो न स्यात्। स्याच्चैकहस्तदीर्घमान्तरीयमिदमिति।

यत्तु-" तथा सति उत्पद्य द्वित्रक्षणमवस्थायोपरतस्य घटस्य निष्परिमाणकत्वमेव प्रसज्येत। कादाचित्कत्वात्" इति

तन्न। आश्रयद्रव्यापेक्षया कादाचित्कत्वस्य विवक्षितत्वात्। यावदाश्रयद्रव्यभावि धर्म एव परिमाणं न त्वाश्रयद्रव्येऽनुवर्तमाने सङ्कोचविकासभाजि तत्तदवस्थाभेदेन तस्य परिमाणभेद इत्येवाभिप्रायः।

यदपि-" मूषानिषिक्तद्रुतपारदादिप्रतिमाया निष्परिमाणकत्वं प्रसज्येत। तत्परिमाणस्यौपाधिकत्वात्"-इति।

तदपि न। पारदप्रतिमाया द्रवीभावानन्तरं पारदप्रतिमात्वाभावेन पदार्थान्तरोत्पत्त्या परिमाणान्तरस्याप्युत्पन्नत्वेन तस्य तत्पदार्थं प्रति स्वाभाविकत्वात्।

यत्तु-" न च विभुत्वेनाभ्युपगतस्य ज्ञानस्य सङ्कोचविकासावुपपद्येते। तथा सत्याकाशस्यापि सङ्कोचविकासप्रसङ्गात्।"—इति।

तन्न। पदार्थस्वभावा युक्तिनियाम्यस्वाभावात्। यस्य पदार्थस्य यस्स्वभावः प्रमाणप्रतिपन्नस्स युक्तिसहस्रेणापि नापनोद्यो भवति,

धस्य च यो न प्रमाणप्रतिपन्नस्सोऽपि नारोपयितुं शक्यः। अग्निजलादीनामुष्णत्वशीतत्वादीनां स्वाभाविकधर्माणां युक्तिसहस्रेणाप्यन्यथयितुमशक्यत्वात्। तथा च ज्ञानसङ्कोचविकासयोः प्रमाणसम्प्रतिपन्नत्वे प्रीतिबन्दीमात्रेण किं कर्तुं शक्यते।

यदपि—प्रशस्तभाष्यवाक्यं किमप्युदाहृत्य सावयवानामेव सङ्कोचविकासौ निरवयवानां न स्त इत्युक्तम्। तदपि न। मूर्तद्रव्यगतसङ्कोचविकासयोस्तद्रूपत्वेऽप्यमूर्तद्रव्यगतयोस्तयोरन्यादृशत्वसम्भवात्। निरवयवानामप्यौपाधिकप्रदेशविशेषस्याप्यवयवत्वादित्यकल्पनेन तल्लक्षणसमन्वयसम्भवाच्च।

एतेन—"निरवयवे ज्ञाने तदभ्युपगमः सुतरामयुक्तः।" इति प्रत्युक्तम्। अस्मत्सिद्धान्ते संयोगविशेषस्यैव कर्मत्वेनाकुञ्चनादिरूपकर्मविशेषस्य संयोगविशेषात्मकस्य ज्ञानद्रव्ये सम्भवाच्च।

यत्तु—ज्ञानरूपस्य धर्मस्यात्मनश्च धर्मिणोऽभेदं सिद्धवत्कृत्यज्ञानस्य विभुत्वेनात्मनोऽपि विभुत्वात्सर्वात्मना परस्परसंयुक्तत्वाद्भोगसाङ्कर्यापादनम्। तद्, धर्मधर्मिणोर्ज्ञानात्मनोर्भेदसाधनेन निरस्तम्।

चतुर्थविरोधपरिहारखण्डनावसरे विरोधपरिहारप्रकारमनाकलय्यैव विरोधोद्भावकशास्त्रिणोक्तमेव शब्दान्तरेण कथयता खण्डनकारेण को विशेषस्साधित इति न विद्मः। परिहारकृता हि—सम्पद्याविर्भावाधिकरणे स्वाभाविकस्वरूपाविर्भावो भवतीत्येतावन्मात्रं प्रति-

पाद्यते। अभावाधिकरणे तु सङ्कल्पानुगुणं सशरीरत्वमशरीरत्वं चेति विषयविवेचनेन विरोधः परिहृतः।

यच्च—स्वोद्भावितविरोधाभाससमर्थनाय "आगन्तुकदेहपरिग्रहे हि 'स्वेन रूपेणे' ति विशेषणमनर्थकं स्यात्। अविशेषणेऽपि तस्य स्वकीयरूपत्वसिद्धेः" इति तदीयभाष्यग्रन्थ इत्युदाह्रियते विरोधोद्भावकेन खण्डनकारेण च। तदिदमतिसाहसकार्यमबद्धं पठित्वेत्यादि न्यायमनुसरति। यतः—"आगन्तुकविशेषपरिग्रहे", इत्येव शुद्धः पाठो दृश्यते प्राचीनेषु कोशेषु। दक्षिणदेशमुद्रितेषु च कोशेषु।

तस्मात्खण्डनकारस्य परिहारखण्डनपरिश्रमोऽयं वृथापरिश्रममात्ररूप इति, विदुषो विदाङ्कुर्वन्तु।

श्रीकाशी—प्रतिवादि—भयङ्कराचार्यसंस्थानम्। } इति—श्रीस्वामिनामनुमनः देशिकवरदाचार्यः, आस्थानपण्डितः

---

Author & Publisher :—

Shri Deshik Varadacharya,

Asthan Pandit, Shri Prativadibhayankar Math,

Conjeerveram.

Printers :—

G. K. Gurjar at Shri Lakshmi Narayan Press,

Jatanbar, Benares City.

& B. L. Pawagi at the Hitchintak Press,

Ramghat, Benares City.